॥ अर्हम् ॥

उपाध्यायश्रीक्षमाकल्याणगणिविरचितम्

# श्रीप्रश्नोत्तरसार्धशतकम् ।

मुनिसुखसागरेण संशोधितम् ।

जैनाचार्यश्रीमत्कृपाचन्द्रसूरीणां शिष्येण

जैनाचार्यश्रीमत्कृपाचन्द्रसूरीणां शिष्येण मुनिसुखसागरेण संशोधितम् ।

इदं पुस्तकं सौर्यपुरनिवासि जव्हेरी फकीरचन्द्र घेलाभाईना

मोहमय्यां 'निर्णयसागर' मुद्रणालये कोलभाटवीथ्यां २३ तमे गृहे रामचन्द्र येसु शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

विक्रमसंवत् १९७२. ईसु १९१६.

॥ इति सूचिपत्रम् ॥



क्रम्याऽपापापुर्याः, समीपे महसेनवनं प्राप्त इत्यादि, श्रीमदाचाराङ्गद्वितीयश्रुतस्कन्धे षष्ठाध्ययने, पुनरयं पाठः, तओणं समणे भगवं महावीरे उप्पन्न नाणदंसणधरे० पुव्वं देवाणं धम्ममाइक्खइ तओ पच्छा मणुस्साणं तओणं०गोयमाईणं समणाणं इत्यादि । तत्त्वं पुनर्विशिष्टश्रुतधराः । केवलिनो वा विदन्तीति, अत्राह प्रेरको, यदि देवा एवाजग्मुस्तर्हि किमाश्चर्य, मनुष्याद्यभावे को विरतिं प्रतिपद्येतेति । तत्रोच्यते, अहो केवलं देवागमनेऽपि आश्चर्यं युक्तमेव, यतो देवेषु अपि मिथ्यात्वविरतिरूपसम्यक्त्वप्राप्तिर्भवत्येव, तदानीं तु सापि न जाता इति आश्चर्यं, यदुक्तमावश्यकबृहद्वृत्तौ ॥ भगवति धर्मम् कथयति सति मनुष्यः सर्व विरति देशविरति सम्यक्त्वश्रुतसामायिकानां चतुर्णामन्यतमत्प्रतिपद्यते तिर्यञ्चस्त्रीणि सर्वविरतिवर्ज्यानि द्वे वा सम्यक्त्वश्रुतसामायिके प्रतिपद्यन्ते यदि नास्ति मनुष्यतिरश्चां कश्चित्प्रतिपत्ता ततो नियमत एव सुरेषु सम्यक्त्वप्रतिपत्तिर्भवतीत्यादि, इति वीरप्रभोराद्यदेशनायां मनुष्याद्यागमाऽनागमविचारः ॥ ४ ॥

ननु समवसरणे भगवद्वन्दनार्थं समागतानां देवानां वाहनानि तृतीयप्राकारभूमौ, अलग्नानि स्युर्लग्नानि वा, उच्यते । अलग्नानि एव स्युर्यदुक्तम्, श्रीभगवतीवृत्तौ तृतीयशतके प्रथमोद्देशके तामल्यधिकारे ॥ समवसरणे देवयानानि भूमावलग्नानि स्युरित्यादि, इति पञ्चमो विचारः ॥ ५ ॥

ननु समवसरणे केवलिनो भगवन्तं त्रिःप्रदक्षिणीकृत्य, नमस्तीर्थायेत्युक्त्वा, उपविशन्ति, तत्र तीर्थशब्देन प्रथमो गणधर उच्यते किं वा चतुर्विधसंघादिरिति चेच्छृणु प्रथमगणधर एव तत्र बोध्यो, नत्वन्यः कश्चित् श्रीमलयगिरिसूरिभि-

ननु भगवान् दीक्षाग्रहणसमये कस्मै नमस्करोतीति चेदुच्यते, सिद्धेभ्यः, तेषामेव तदानीं तदर्हत्वात्, उक्तं चैतदाचाराङ्गसूत्रे द्वितीयश्रुतस्कन्धे पष्ठाध्ययने,

**तओणं से समणे भगवं महावीरे पंचमुट्ठियं लोयंकरेत्ता सिद्धाणं नमोकारं करेइ इत्यादि ॥**

इति भगवतो दीक्षासमये सिद्धनमस्कारविचारः ॥ ३ ॥

ननु वीरप्रभोः प्रथमदेशनायां कोऽपि न प्रतिबुद्धस्तत्र किं चतुर्विधा देवा एवाजग्मुः किम्वा मनुष्यादयोऽपि, इति चेदुच्यते, कल्पवृत्तिस्थानाङ्ग वृत्तिप्रवचनसारोद्धारबृहद्वृत्त्याद्यभिप्रायेण तु सर्वेऽप्याजग्मुर्न केवलं देवा एव, तथा च तद्वृत्तिपाठोऽष्टत्रिंशद-धिकैकशततमे ॥ १३८ ॥ दशाश्चर्यद्वारे, श्रूयते हि भगवतः श्रीवर्द्धमानस्वामिनो जृम्भिकग्रामाद्बहिः समुत्पन्ननिस्सपत्नकेवलालो-कस्य तत्कालसमायात संख्याऽतीतसुरविरचितचारुसमवसरणस्य भूरिभक्तिकुतूहलाकुलितमिलिताऽपरिमिताऽमरनरतिरश्चां स्वस्व भाषानुसारिणा महाध्वनिना धर्मकथां कुर्वाणस्यापि न केनचिद्विरतिः प्रतिपन्ना केवलं स्थितिपरिपालनायैव धर्मकथाऽभूदित्यादि, इत्थमेव श्रीमदभयदेवसूरिकृतस्थानाङ्गवृत्तिपाठोऽपि बोध्यः, श्रीहरिभद्रसूरिकृताऽवश्यकबृहद्वृत्त्यभिप्रायेण तु तदा देवा एवाजग्मुर्न तु मनुष्यादयस्तथा च संक्षेपतस्तत्पाठः, भगवतो ज्ञानरत्नोत्पत्तिसमनन्तरमेव देवाश्चतुर्विधा उपागता आसन् तत्र प्रव्रज्यादि-प्रतिपत्ता न कश्चिद् विद्यते, इति भगवान् विज्ञाय विशिष्टधर्मकथनाय न प्रवृत्तवान्, इत्यादि यावत्, ततो ज्ञानोत्पत्तिस्थाने मुहूर्त्तमात्रं देवपूजां जीतमिति कृत्वाऽनुभूय देशनामात्रं कृत्वा, असंख्यदेवकोटिपरिवृतो रात्रौ एव विहृत्य द्वादशयोजनान्यति-

पीठे पादौ संस्थाप्य सिंहासने निषण्णः सन् योगमुद्रया करौ धृत्वा देशनां करोति, अत एव तत् प्रतिरूपत्वादाचार्या अपि प्रायोऽनया मुद्रयैव व्याख्यानं कुर्वन्ति, केवलं तेषां मुखवस्त्रिकाधारणमेव विशेषः, यदुक्तं चैत्यवन्दनबृहद्भाष्ये ॥

जं पुण भणंति केई ओसरणे जिणसरूवमेयं तु । जणववहारो एसो परमत्थो एरिसो एत्थ ॥ ५३ ॥
सिंहासणे निसन्नो पाए ठविऊण पायपीढंमि ॥ करधरिय जोगमुद्दो जिणनाहो देसणं कुणइ ॥ ५४ ॥
तेणं चियसूरिवरा कुणंति वक्खाणमेयमुद्दाए । जं ते जिणपडिरूवा धरंति मुहपोत्तियं नवरं ॥ ५५ ॥

इति समवसरणे भगवदासनविचारः ॥ १ ॥

ननु भगवान् देशनारम्भे कं प्रणमतीति, चेदुच्यते, चतुर्विधसंघरूपं तीर्थं प्रणमति, यदुक्तमावश्यकनिर्युक्तिबृहद्वृत्त्योः ॥

तित्थपणामं काउं कहेइ साहारणेण सद्देणं । सव्वेसिं सण्णीणं जोयणणीहारिणा भगवं ॥

इत्यादि एवं तीर्थोद्गारप्रकीर्णकेऽपि बोध्यम् । तथा चैत्यवन्दन बृहद् भाष्येऽपि प्रोक्तम् ॥

संघोमहाणुभावो अमरिंद नरिंदवंदिओ एसो । तित्थयरे हिंवि नियमा पणमिज्जइ देसणारंभे ॥ १ ॥

इति भगवानपि देशनारम्भे संघं प्रणमतीति विचारः ॥ २ ॥

१ गाथानां पञ्चशते २ नमोतित्थस्सत्तिवचनात्

श्रीसिद्धेभ्यो नमः ।

श्रीक्षमाकल्याणोपाध्यायविरचितम्

# प्रश्नोत्तरसार्धशतकम् ।



श्रीसर्वज्ञं नत्वा स्मृत्वा पञ्चमगणेशितुर्वाचः । प्रश्नोत्तरसार्धशतं वक्ष्ये सिद्धान्तसंबद्धम् ॥ १ ॥
प्राचीनेषु प्रायः शतकादिषु सन्ति केऽपि ये नार्थाः । सद्यः स्वपरस्मृतये संगृह्यन्तेऽत्र ते लेशात् ॥ २ ॥
इमे द्वे आर्ये ॥ प्रसन्नाः सन्तु गुरवो बुद्धिं दिशतु भारती । येन सम्यक् प्रजायेत प्रयासः सफलो मम ॥३॥

ननु समवसरणस्थो भगवान् केनाऽऽसनेनोपविश्य देशनां दत्ते, पद्मासनेन किंवा अन्येन केनचिदासनेनेति, उच्यते, अत्र केचिदाचार्या, एतच्चैत्यगृहादिषु दृश्यमानमेव जिनासनस्वरूपं वदन्ति, परमेष लोकव्यवहारोऽस्ति, निश्चयतस्तु भगवान् पाद-

१ श्रीसमयसुन्दरोपाध्यायविरचितविशेषशतकविशेषसंग्रहसमाचारीशतकादिषु ।

भावतश्च तत्र द्रव्यतः शरीरेण भावतो ज्ञानादिभिस्तत्र स्त्रियः समवसरणस्था उभयथाप्युत्थिताः शृण्वन्ति पुरुषास्तु द्रव्यतो भाज्या भावोत्थितानां तु धर्ममावेदयत्युत्तिष्ठासूनां च देवानां तिरश्चां च येऽपि कौतुकादिना शृण्वन्ति तेभ्योऽप्याचष्टे, इत्यादि, इति समवसरणे गणधरकेवल्यादीनामुपवेशनादिविचारः ॥ ७ ॥

ननु समवसरणे द्वितीयपौरुष्यां भगवति देवच्छन्दके गते सति कः कुत्रोपविश्य धर्मं कथयतीति, उच्यते, ज्येष्ठो गणधरोऽन्यो वा राज्ञा समानीते सिंहासने भगवतः पादपीठे वोपविश्य धर्ममाचष्टे, यदुक्तं बृहत्कल्पवृत्तौ प्रथमखण्डे, इत्थं बलौ प्रक्षिप्ते भगवानुत्थाय प्रथमप्राकारान्तरादुत्तरद्वारेण निर्गत्य पूर्वस्यां दिशि स्फटिकमये देवच्छन्दके यथासुखं समाधिना व्यवतिष्ठते । अथोपरि तीर्थमितिद्वारं भगवत्युत्थिते उपरि द्वितीयपौरुष्यां तीर्थं प्रथमगणधरोऽपरो वा धर्ममाचष्टे ॥ आह, भगवानेव किमिति नाऽऽचष्टे किं तत्कथने केऽपि गुणाः सन्ति, उच्यते सन्ति इति ब्रूमः के पुनस्ते इत्याह ॥

खेयविणोओ सीसगुणादीवणा पच्चओ उभयओ वि सीसायरियकमो वि य गणहरकहणे गुणा होंति ॥

भगवतः खेदविनोदो भवतीत्यादि आह, स गणधरः क्व निषण्णः कथयति, उच्यते ॥

राओवणीय सीहासणो वनिविट्ठो व पायवीढंमि जिट्ठो अन्नयरो वा गणहारि कहइ बीयाए ॥

राज्ञोपनीते ढौकिते सिंहासने वा तदभावे भगवतः पादपीठे वा, उपविष्टो ज्येष्ठो प्रथमो गौतमस्वाम्यादिस्तदभावे अन्यतरो वा गणधारी कथयति, द्वितीयायां पौरुष्यामिति, इति द्वितीयपौरुष्यां कः कुत्रोपविष्टो धर्ममाचष्ट इत्यादि विचारः ॥ ८ ॥

लिभ्यो नमोऽतिशयज्ञानिभ्यः इति भणित्वा अतिशयिनां पृष्टतो निषीदन्ति एवं मनःपर्यायज्ञान्यादयोऽपि नमन्तः सन्तः व्रजन्ति स्वं स्वं स्थानमिति, तथा वैमानिकानां देव्यः पूर्वद्वारेण प्रविश्य भुवनबान्धवं त्रिः प्रदक्षिणीकृत्य नत्वा च नमस्तीर्थाय नमः सर्वसाधुभ्यः इत्यभिधाय निरतिशयसाधूनां पृष्ठतस्तिष्ठन्ति न निषीदन्ति श्रमण्योऽपि पौरस्त्यद्वारेण प्रविश्य तीर्थकृतं प्रदक्षिणीकृत्य प्रणम्य च तीर्थस्य साधूनां च नमस्कारम् विधाय वैमानिकदेवीनां पृष्ठतस्तिष्ठन्ति न निषीदन्ति भवनपतिदेव्यो ज्योतिष्कदेव्यो व्यन्तरदेव्यश्च दाक्षिणात्य द्वारेण प्रविश्य तीर्थकरादीनभिवन्द्य दक्षिणपश्चिमदिग्भागे यथाक्रममेव तिष्ठन्ति।

भवणवई जोइसिया बोद्धव्वा वाणमंतरसुरा य। वेमाणिया य मणुया पयाहिणं जं च निस्साए ॥

भवनपतयो ज्योतिष्का वानव्यन्तर सुराश्च एते भगवन्तमभिवन्द्य यथोपन्यासमेव पृष्ठत उत्तरपश्चिमे दिग्विभागे तिष्ठन्तीति बोद्धव्याः वैमानिकदेवा मनुष्याश्च च शब्दाद् मनुष्यस्त्रियश्च प्रदक्षिणां कृत्वा तीर्थकरादीनभिवन्द्योत्तरपूर्वदिग्भागे यथाक्रममेव तिष्ठन्तीति। जं च निस्साएत्ति य परिवारो यं देवं मनुजं वा निश्राय निश्रां कृत्वा, आगतः स तस्यैव पार्श्वे तिष्ठतीत्यादि एवमावश्यकवृहद्वृत्तावपि बोध्यं परं तत्रैतावान् विशेषपाठः। तथाहि, अत्र च मूलटीकाकारेण भवनपतिज्योतिष्कव्यन्तरदेवीनां भवनपति ज्योतिष्कव्यन्तरवैमानिकदेवानां मनुष्याणां मनुष्यस्त्रीणाञ्च स्थानं निषीदनं वा स्पष्टाक्षरैर्नोक्तमेव स्थानमात्रमेव प्रतिपादितं पूर्वाचार्योपदेशलिखितपट्टिकादिचित्रकर्मबलेन तु सर्वा एव देव्यो न निषीदन्ति देवाः पुरुषाःस्त्रियश्च निषीदन्तीति प्रतिपादयन्ति केचनेति श्रीमदाचाराङ्गवृत्तौ षष्ठाध्ययने प्रथमोद्देशकेऽपि लेशतोऽयमधिकारो यथा उत्थिता द्रव्यतो

जे ते देवेहिं कया तिदिसिं पडिरूवगा जिणवरस्स तेसिं पि तप्पभावा तयाणुरूवं हवइ रूवं ॥

यानि तानि देवैः कृतानि तिसृषु दिक्षु जिनवरस्य, प्रतिरूपकाणि तेषामपि तत्प्रभावात् तीर्थकरप्रभावात् तदनुरूपं तीर्थकररूपानुरूपं रूपं भवति ॥ अथ ये यथा भगवतः समवसरणे निषीदन्ति तिष्ठन्ति वा तानभिधित्सुः संग्रहगाथामाह ॥

तित्थाइ से स संजय देवी वेमाणियाण समणीओ भवणवइवाणमंतर जोइसियाणं च देवीओ ॥

तीर्थं गणधरस्तस्मिन्नुपविष्टे सति अतिशयिनः संयता, उपविशन्ति ततो देव्यो वैमानिकानाम् ततः श्रमण्यः तथा भवनपति व्यन्तरज्योतिष्काणां च देव्य इति अथ, एतदेव विवृणोति ।

केवलिणो तिउणं जिणं तित्थपणामं च मग्गतो तस्स । मणमादीवि णमंता वयंति सट्ठाणसट्ठाणं,

केवलिनः पूर्वद्वारेण प्रविश्य जिनं त्रिगुणं त्रिःप्रदक्षिणीकृत्य नमस्तीर्थायेति वचसा तीर्थप्रणामं च कृत्वा तस्य तीर्थस्य प्रथमगणधररूपस्य शेषगणधराणां च मार्गतः पृष्ठतो दक्षिणपूर्वस्यां निषीदन्ति तथा । मणमादीवित्ति । मनःपर्यायज्ञानिन आदिशब्दात् अवधिज्ञानिनः चतुर्दशपूर्विणो दशपूर्विणो नवपूर्विण आमर्षौषध्यादिविविधलब्धिमन्तश्च प्राच्यद्वारेण प्रविश्य भगवन्तं त्रिःप्रदक्षिणीकृत्य नमस्कृत्य च नमस्तीर्थाय नमो गणधरेभ्यो । नमः केवलिभ्य इत्यभिधाय केवलिनां पृष्ठत उपविशन्ति शेषसंयता अपि प्राचीनद्वारेणैव प्रविश्य भुवनगुरुं प्रदक्षिणीकृत्य वन्दित्वा च नमस्तीर्थाय नमो गणभृद्भ्यो नमः केव-

१ साधव. सर्वेऽपि उत्कटिकासनाः शृण्वन्ति, इत्युक्तमावश्यकचूर्णौ ।

बृहत्कल्पवृत्तौ, इत्थमेवोक्तत्वात् तदक्षराणि तु अग्रेतनप्रश्नोत्तरादुह्यानि, इति केवलिनोऽपि प्रथमगणधरं वचसा नमस्कुर्वन्ति इतिविचारः ॥ ६ ॥

ननु समवसरणे गणभृत्केवलिप्रभृतयः कया परिपाट्या, उपविशन्ति, के पुनरुत्थिता एव शृण्वन्तीति, उच्यते, श्रीबृहत्कल्पवृत्तौ प्रथमखण्डे समवसरणाधिकारे विस्तरत एतत्स्वरूपं जानीहि, तथा च तत्पाठः ।

आयाहिण पुव्वमुहो तिदिसिं पडिरूवगा उ देवकया । जेट्ठगणी अण्णो वा दाहिणपुव्वे अदूरंमि ॥

आयाहिण त्ति, भगवान् चैत्यद्रुमस्य प्रदक्षिणां विधाय पूर्वमुखः सिंहासनमध्ये आस्ते, यासु च दिक्षु भगवतो मुखं न भवति, तासु तिसृष्वपि तीर्थकराकारधारकाणि सिंहासनचामरछत्रधर्मचक्रालङ्कृतानि प्रतिरूपकाणि देवकृतानि भवन्ति, तथा सर्वोऽपि लोको जानीते भगवानस्माकं पुरतः कथयति, भगवतश्च पादमूले जघन्यत एकेन गणिना गणधरेणाऽविरहितं भवति स च ज्येष्ठोऽन्यो वा भवेत्, प्रायो ज्येष्ठ एव, स च ज्येष्ठगणिरन्यो वा पूर्वद्वारेण प्रविश्य दक्षिणपूर्वदिग्भागे अदूरे प्रत्यासन्न एव भगवतो भगवन्तं प्रणिपत्य निषीदति, शेषा अपि गणधरा एवमभिवन्द्य ज्येष्ठगणधरस्य मार्गतः पार्श्वतश्च निषीदन्ति इति । आह, भुवनगुरुरूपस्य सकलत्रिभुवनातिशायित्वात् त्रिदशकृतानां प्रतिरूपकाणां तेन सह साम्यमसाम्यं वा इत्याशङ्का निरासार्थमाह ॥

१ सप्तमादृष्टमाच्च ।

नन्तु केवलिनां यद् वेदनीयादिकर्मचतुष्टयं शेषं स्थितं, तत् किं स्वरूपमिति, उच्यते। जरद्वस्त्रप्रायं तज्जानीहि, गुणस्थानक्रमारोहवृत्तौ तथैवोक्तत्वात्, यत्तु केचिदज्ञानिनो दग्धरज्जुतुल्यं तद्वदन्ति, तदागमविरुद्धत्वादयुक्तत्वाच्च, मिथ्याभूतमवगन्तव्यं यदुक्तं सूत्रकृदङ्गवृत्तौ द्वितीयश्रुतस्कन्धे, आहारपरिज्ञाख्ये तृतीयाध्ययने बोटकमतनिराकरणेन केवलिनो भुक्तिस्थापनाधिकारे, यदपि दग्धरज्जुस्थानिकत्वमुच्यते, वेदनीयस्य, तदप्यनागमिकमयुक्तिसंगतं चागमे ह्यत्यन्तोदयः सातस्य केवलिनि, अभिधीयते, इत्यादि, नवरं, केवलिसमुद्घातानन्तरं, वेदनीयस्य, दग्धरज्जुतुल्यमस्ति, यदुक्तमाचाराङ्गवृत्तौ प्रथमश्रुतस्कन्धस्योपधानश्रुताध्ययनस्य पीठिकायां निर्युक्तिगाथाव्याख्याने, तथा दहनं केवलिसमुद्घातध्यानाग्निना वेदनीयस्य भस्मसात्करणं शेषस्य च दग्धरज्जुतुल्यत्वापादनमित्यादि। यत्पुनरावश्यकबृहद्वृत्तौ द्वितीयखण्डे कायोत्सर्गाधिकारे, उक्तं, दग्धरज्जुकल्पेन भवोपग्राहिणा कर्मणाऽल्पेनापि सता, केवलिनोऽपि न मुक्तिमासदयन्तीत्यादि॥ तदपि, अल्पेनेति पदोपादानात् केवलिसमुद्घातानन्तरकालं चतुर्दशगुणस्थानकालं वाश्रित्योक्तं संभाव्यते। इति, केवलिनो न सर्वदा दग्धरज्जुतुल्यं वेदनीयादिकर्मेत्यधिकारः॥ ११॥

नन्तु एकाऽवतारिदेवानां च्यवनचिह्नानि प्रादुर्भवन्ति नवा, उच्यते न भवन्त्येव। तीर्थकृज्जीवस्य तु प्रत्युताऽत्यन्तं सातोदय एव स्यात्, यदुक्तं, परिशिष्टपर्वणि श्रीहेमाचार्यैः,

राजन्नेकावताराणामन्तकालेऽपि नाकिनां तेजः क्षयादिच्यवनलिङ्गान्याविर्भवन्ति न॥ २६६॥

यन्ति, तदुक्तिः परास्ता, शास्त्रे हि चैत्यान्तः स्वजनानां जोत्कारस्यैव निषिद्धत्वात्। इति समवसरणादौ श्राद्धादीनां परस्परविनयकरणादिविचारः ॥ ९ ॥

ननु सांप्रतं दीक्षाद्यवसरे आचार्यादिभिरुत्थाय शिष्यशिरसि यद्वासक्षेपः क्रियते। तद् भगवदाज्ञानुसारि किं वा तदाज्ञाविरुद्धमिति, चेदुच्यते ॥ जिनाज्ञानुसार्येवेदं, श्रीमद्वीरस्वामिनाऽपि गौतमादिशिरस्सु तद्विहितत्वात्। यदुक्तमावश्यकबृहद्वृत्तौ निर्युक्तिगाथाव्याख्याने भगवन्मुखात्। त्रिपदीश्रवणात् गणभृतामुत्पादव्ययध्रौव्ययुक्तं सदिति प्रतीतिरुपजायते अन्यथा सत्तायोगात् ततश्च ते पूर्वभवभावितमतयो द्वादशाङ्गमुपरचयन्ति, ततो ॥ भगवं अणुण्णं करेति सक्को य दिव्वं वइरमयं थालं दिव्वचुण्णाणं भरेऊण सामिमुवगच्छति ताहे सामी सीहासणाओ उट्ठेत्ता पडिपुण्णं मुट्ठिं केसराणगेण्हति ताहे गौतमसामिप्पमुहाइक्कारस वि गणधरा ईसिं ओणया परिवाडीए ठायंति ताहे देवा आउज्जगीत सद्दं निरुंभंति ताहे सामी पुव्वं तित्थं गोतमसामिस्सदव्वेहिं गुणेहिं पज्जवेहिंते अणुजाणामि त्ति भणति चुण्णाणियसे सीसेच्छुहति ततो देवा वि चुण्णवासं पुप्फवासं च उवरिं वासंति गणं च सुधम्मसामिस्सधुरे ठवित्ता अणुजाणाति एवं सामाइयस्स अत्थो भगवतो निग्गओ सुत्तं गणहरे हिं तो णिग्गतम् ॥ इत्यलं विस्तरेणेतिगाथार्थः। इति गौतमादिशिरस्सु भगवद्, वासक्षेपादिविचारः ॥ १० ॥

---

१ जुहारइतिप्रसिद्धं।

तत्राऽऽगाड्ढरो नाम श्रमणोपासकःप्रगे। वन्दनाय महर्षीणां हर्षेणोत्फुल्ललोचनः ॥ ६० ॥
स त्रिनैषधिकीं कुर्वन् प्रविवेश प्रतिश्रयम्। अथैर्यापथिकीं प्रत्य क्रामदुच्चैस्तरस्वरम् ॥ ६१ ॥
तदनन्तरमाचार्यान् साधूनपि यथाविधि। वन्दित्वा निषसादाऽग्रे विष्टरं प्रतिलिख्य सः ॥ ६२ ॥
अप्यार्यरक्षितो धीमांस्तेन सार्द्धं प्रविश्य सः। वन्दनैर्यापथिक्यादि तस्माच्छ्रुतमधारयत् ॥ ६३ ॥
तद्दर्शितविधिं चाभिनयन् पठनपूर्वकम्। अवन्दताऽऽचार्यपादान् साधूनप्यार्यरक्षितः ॥ ६४ ॥
ढड्ढरश्रावकं त्वार्यरक्षितो नह्यवन्दत। सुधीरपि निराम्नायं कियद् विज्ञातुमीश्वरः ॥ ६५ ॥
निषण्णं सोमतनयं तमवन्दितढड्ढरम्। आचार्या विविदुः कोऽपि श्राद्धोऽयं नूतनः खलु ॥ ६६ ॥
धर्मलाभाशिषं दत्त्वा शरदम्भोऽमलाशयाः। पृच्छन्ति स्म तमाचार्याः कुतो धर्मागमस्तव ॥ ६७ ॥

एवमावश्यकवृहद्वृतावपि बोध्यम्, पौषधविधिप्रकरणवृतौ, पुनर्वृहच्चैत्यवन्दनाधिकारे चैत्यवन्दनार्थमागतान् गुरूनपि वन्दते इत्यादि पाठो योगशास्त्रवृत्तौ च विस्तरविधिना चैत्ये साधुवन्दनाधिकारो ज्ञातव्यः, पुनः सिद्धान्ते श्रीकृष्णवासुदेवः श्रीनेमिजिनसमक्षं, सव्वेसाहू वारसावत्त वंदणेण वन्दत्युक्तमस्ति, तथा चैत्यवन्दनभाष्यादौ, क्षमाश्रमणपूर्वकं, जावंति के वि साहू, इत्यादि गाथाभणनमुक्तमस्तीत्यतश्चैत्ये साध्वादिवन्दनं युक्तमेवेति। एतेन ये केचिदाधुनिकपण्डितमन्याश्चैत्ये साध्वादिवन्दनं निषेद-

ननु समवसरणे भगवत्पुरोऽल्पर्द्धयो देवमनुष्या महर्द्धिकं देवादिकं प्रणामादिना सत्कारविषयं कुर्वन्ति नवा? उच्यते, कुर्वन्त्येव अन्यथा, आज्ञाभङ्गदोषप्रसङ्गः, यदुक्तं बृहत्कल्पभाष्ये आवश्यकनिर्युक्तिबृहद्वृत्त्योश्च तेषां च इत्थं स्थितानां देवनराणां स्थितिं प्रतिपादयन्नाह ॥

एंतं महड्ढियं पणिवयंति ठियमवि वयंति पणमंता ण वि जंतणा ण विकहा ण परोप्पर मच्छरो ण भयं,

व्याख्या, ये अल्पर्द्धयः पूर्वं भगवतः समवसरणे स्थितास्ते आगच्छन्तं महर्द्धिकं प्रणिपतन्ति नमस्कुर्वन्ति। अथ महर्द्धिकः प्रथमस्थितस्ततो येऽल्पर्द्धयः पश्चादागच्छन्ति ते पूर्वं स्थितमपि महर्द्धिकं प्रणमन्तो व्रजन्ति स्वस्थानमित्यादि, एवं चैत्यगृहसाधुप्रतिश्रयादावपि, विवेकिना ऽल्पर्द्धिकेन महर्द्धिकस्य विनयप्रतिपत्तिः कर्त्तव्यैव। विनयमूलत्वात्, श्रीजिनधर्मस्येति, अन्यथा विद्वत्सभायामार्यरक्षितस्येव, तस्याऽज्ञत्वं प्रादुर्भवेदिति, तथा चायं श्रीहेमाचार्यकृतपरिशिष्टपर्वग्रन्थे आर्यरक्षितसंबन्धः, इत्यादि

गत्वा चेक्षुगृहद्वारे स्थिरधीरार्यरक्षितः। अचिन्तयदविज्ञातः कथमन्तर्विशाम्यहम् ॥ ५५ ॥
राज्ञामिव गुरूणां हि संनिधाने यतस्ततः। विदितोऽपि नोपसर्पेदहं तु विदितोऽपि न ॥ ५६ ॥
तदत्रैव क्षणं स्थित्वा वस्त्यन्तर्विशाम्यहम्। प्रातर्वन्दनकायात श्रमणोपासकैः सह ॥ ५७ ॥
इत्यार्यरक्षितस्तस्थौ द्वारेऽपि द्वारपालवत्। विदुषां रभसारम्भे विवेको ह्यर्गलायते ॥ ५८ ॥
मालव कौशिकी मुख्य ग्रामरागपरिस्पृशा। स्वाध्यायेनापि साधूनां स ययौ लयमेणवत् ॥ ५९ ॥

सांप्रतं, तस्य तद्बलं प्रथमसंहनिन एव तदुक्तत्वात्, सांप्रतं तु सामान्यलोकबलाद् द्विगुणं त्रिगुणं चतुर्गुणं वा तस्य बलं भवति नाधिकमिति, यदुक्तं निशीथचूर्णौ पीठिकायां, थीणद्धीबल परूवणा कज्जइ केसव अद्धगाहा, केसवो वासुदेवो जं तस्स बलं तब्बलाओ अद्धबलं थीणद्धिणो भवति तं च पढमसंघयणिणो, इयाणिं पुण सामन्नबलादुगुणं चउगुणं वा भवति, सो एवं बलजुत्तो, मागच्छं रूसितो विणासेज्ज तम्हा सो लिंगपारंची कायव्वो सोय साणुण तं भन्नइ" सुय लिंगं णत्थि तुह चरणं जइ एवं गुरुणा भणितो मुक्कं तोसोहणं अह न मुयइ ता संघो समुदितो हरति न एको मा एगस्स पदो सं गमिस्सति' दुट्ठोय वावादेस्सति लिंगावहारणिय मणत्थं भण्णइ "अविकेवलगाहा" अवि संभावणे किं संभावयति इमं जतिवि तेणेव भवग्गहणेण केवलमुप्पाडेइ तहवि से लिंगं ण दिज्जइ तस्स वा अन्नस्स वा एसनियमो अणतिसइणो जो पुण अवहिणाणातिसती सो जाणइ णपुण एयस्स थीणद्धी निद्दोदओ भवति देइ से लिंगं इतरहा न देइ लिंगावहारेणं पुण कज्जमाणे अयसुपदेशो, देसवओत्ति सावगो होहि थूलग पाणादिवायादिनियत्तो पंचाणुव्वयधारी ताणि वा ण तरसि दंसणं गेण्ह दंसणसावगो भवाहित्ति भणितं भवइ अह एवं पि अणुणेज्जमाणो नेच्छइ लिंगं मोत्तुं ताहे रातो सत्तुं मोत्तुं पलायन्ति देशान्तरं गच्छन्तीत्यर्थः पसादपडिसेवणत्ति दारंगतमिति ॥ एवं बृहत्कल्पतृतीयखण्डेऽपि बोध्यं जीतकल्पवृत्तौ तु यदुदयेऽतिसंक्लिष्टपरिणामाद् दिनदृष्टमर्थमुत्थाय प्रसादयति केशवार्द्धबलश्च जायते तदनुदयेऽपि च स शेषपुरु-

इत्यादि, चैत्यवन्दनबृहद्भाष्ये । इति पुरुषापेक्षया स्त्रीणां प्रायो विशेषतो धर्मे सामर्थ्यमित्यधिकारः ॥ १६ ॥

ननु सेवार्त्तसंहननी जघन्यबलो जीव ऊर्ध्वगतौ अधोगतौ च कियद् दूरम् उत्पद्यते, इति, उच्यते, ऊर्ध्वं, कल्पचतुष्टयं यावत् अधश्च नरकद्वयं यावदुत्पद्यते, यदुक्तं बृहत्कल्पवृत्तौ द्वितीये खण्डे, यः सेवार्त्तसंहननी जघन्यबलो जीवस्तस्य परिणामोऽपि शुभोऽशुभो वा मन्द एव भवति, न तीव्रः, ततः शुभाशुभकर्मबन्धोऽपि तस्य स्वल्पतर एव, अत एव अस्य ऊर्ध्वगतौ कल्पचतुष्टयाद् ऊर्ध्वम् अधोगतौ नरकपृथ्वीद्वयाद् अध उपपातो न भवतीति प्रवचने प्रतिपाद्यते, एवं कीलिकादिसंहननेष्वपि भावना कार्या इति एवमन्यत्रापि दृश्यम् इति सेवार्त्तसंहननिन ऊर्ध्वाऽधोगतिसप्तदशतमो विचारः ॥ १७ ॥

ननु शरीरत्यागसमये जीवः केन केन मार्गेण निर्गच्छन् कां कां गतिं यातीति, उच्यते, पादाभ्यां निर्गच्छन्, नरकं याति ऊरुभ्यां तिर्यग्गतिं, हृदयेन मनुष्यगतिं, शिरसा देवगतिं, सर्वाङ्गेभ्यश्च निर्गच्छन् सिद्धिगतिं याति ॥ यदुक्तं, स्थानाङ्गे पञ्चमाध्ययने तृतीयोद्देशके" पंचविहे जीवनिज्जाणमग्गे, पं० तं० पायेहिं ऊरुहिं उरेणं सिरेणं सव्वंगेहिं ५ पाएहिं निज्जायमाणे निरयगामी, भवति, ऊरुहिं निज्जायमाणे तिरियगामी भवइ, उरेणं निज्जायमाणे मणुयगामी भवति सिरेणं, निज्जायमाणे देवगामी भवति, सव्वंगेहिं" निज्जायमाणे सिद्धिगति पज्जवसाणे, पन्नत्ते इति, इति पादादिभ्यो निर्गच्छतो जीवस्य गतिभेद अष्टादशो विचारः ॥ १८ ॥

ननु स्त्यानर्द्धिनिद्रावतो जीवस्य यद्वासुदेवबलादर्द्धबलं शास्त्रे उक्तमस्ति तदस्मिन् काले विद्यते न वा, उच्यते, नास्तीह क्षेत्रे

ननु काचित् संयमवती स्त्री पञ्चानुत्तरविमानेष्वपि, गच्छति न वा, उच्यते, गच्छति, तथाविधाऽध्यवसायसद्भावात्, उक्तञ्च-प्रज्ञापनावृत्तौ कर्मप्रकृत्याख्यत्रयोविंशतितमपदपर्यन्ते, मानुषी तु सप्तमनरकपृथिवीयोग्यमायुर्न बध्नाति, अनुत्तरसुरायुस्तु बध्नाति, इति न चात्र दृष्टान्तः प्रसिद्धो नास्तीति, वाच्यं; तत्सद्भावात्, यदुक्तमुत्तराध्ययनवृत्तौ नेमिराजीमतीपूर्वभवाधिकारे, ततोऽपराजिताभिख्ये विमाने त्रिदशोधनः यशोमत्यपि चारित्रं चरित्वा तत्र सोऽभवत् २६ इत्यादि, तथा विजयचन्द्रचरित्रेऽपि प्रदीपपूजाधिकारे उक्तं ।

"सा सग्गाओ चविऊं एत्थ वि जम्मंमि तुहसही होइ। तत्तो मरिउं तुब्भे सव्वट्ठे दोवि देवत्ति ॥ ५९ ॥"

इत्यादि, इति स्त्रीपञ्चानुत्तरगतिगमनपञ्चदशो विचारः ॥ १५ ॥

ननु लोके धर्मे च पुरुषाणां प्राधान्येऽपि यत् पुरुषापेक्षया स्त्रीणां प्रायः तपःप्रभृतिधर्मकार्येषु विशेषतः सामर्थ्योद्यमौ दृश्येते, तत्र को हेतुः, उच्यते, तथाविधशुभाध्यवसायसंमिलितस्तत्स्वभाव एव तत्र हेतुतया ज्ञायते नान्यत्किमपि, अत एव चागमे तासां मुक्तिगमनमुक्तं, सप्तमनरकपृथ्वीगमनं च निषिद्धमिति उक्तञ्च,

तद विहु जुत्तामुत्ती जम्हा दीसइ अणुत्तरं विरियं । धम्मविसयंमि तासिं तहा तहा उज्जुमंतीणं ॥६२॥
किं बहुणा सिद्धमिणं लोए लोउत्तरे वि नारीणं । नियनियधम्मायरणं पुरिसेहिंतो विसेसेणं ॥ ६३ ॥
सुहभावसालिणीओ दाणदयासील संजमधरीओ । सुत्तस्स पमाणत्ता लहंति मुत्तिं सुनारीओ ॥ ६४ ॥

इति श्रीशीलाङ्काचार्यैश्चोक्तं, सूत्रकृदङ्गवृत्तौ, केवलिनो भुक्त्यधिकारे विपच्यमानतीर्थकरनाम्नो देवस्य च्यवनकाले षण्मासकालं यावदत्यन्तं सातोदय एव, इत्यसौ, अपि, यदि स्यान्न नो बाधायै। इत्यादि, इत्येकाऽवतारिदेवानां च्यवनचिह्ननिषेधविचारः ॥१२॥

ननु, उपशान्तमोहादिगुणस्थानत्रय ११।१२।१३ वर्तिनो मुनयः प्रकृतिस्थितिरसप्रदेशैः कीदृशं कर्म बध्नन्तीति, उच्यते, उपशान्तमोहादिगुणस्थानेषु प्रकृतितः सातावेदनीयं अकषायत्वात्, स्थित्यभावेन बध्यमानमेव परिशटति, अनुभावतोऽनुत्तरोपपातिकसुखातिशायि, प्रदेशतः स्थूलरूक्षशुक्लादिबहुप्रदेशमिति, उक्तं च,

अप्पं बादरमउअं बहुं च लुक्खं च सुक्किलं चेव। मंदं महव्वयंति य सातावहुलं च तं कम्मं ॥ १ ॥

अल्पं स्थितेरेवाभावात्, बादरम् परिणामतः, मृदुकं अनुभावतः बहु च प्रदेशैः, रूक्षं च स्पर्शतः, शुक्लं च वर्णतः, मन्दं लेपतः स्थूलचूर्णमुष्टिमृष्टकुड्यापतितलेपवत् महाव्ययमिति, एकसमयेनैव सर्वापगमात् सातावहुलं च अनुत्तरसुरसुखाधिकमित्याद्याचाराङ्गवृत्तौ द्वितीयाध्ययने प्रथमोद्देशके, इत्येकादशादिगुणस्थानत्रये बध्यमानकर्मस्वरूपविचारः ॥ १३ ॥

ननु यो जीवो भवे भ्रमन् वारचतुष्टयमाहारकशरीरं कृतवान् स पुनरपि कदाचिन् नरकादिगतिगामी भवेत् किं वा तद्भवे एव मुक्तिं गच्छेदिति, उच्यते, स हि, अवश्यं तद्भवे मुक्तिमेव गच्छेन् नान्यगतिः, यदुक्तं, प्रज्ञापनावृत्तौ षट्त्रिंशत्तमे समुद्घातपदे, चतुःकृत्वः कृताहारकशरीरस्य नरकगमनाभावात् इत्यादि, पुनश्च तत् ऊर्ध्वमवश्यं गत्यन्तराऽसंक्रमेणाहारकसमुद्घातमन्तरेण च सिद्धिगमनभावादिति। इति वारचतुष्टयं कृताहारकशरीरो मुनिस्तद्भवे, एव सिद्धिगामीतिविचारः ॥ १४ ॥

दूसम अणुभावेणं साहूजोगा तु दुल्लभा खेत्ता" । काले वि य दुब्भिक्खा अभिक्खणं हुंति डमरा य ॥ ३ ॥
दूसणअणुभावेण य परिहाणी होति ओसहबलाणं । तेणं मणुयाणं पि उ आउगमेहादिपरिहाणी ॥ ४ ॥

इत्यादि नचात्रैवं शङ्क्यं यदुत, एकैकस्मिन् वस्तुनि प्रतिसमयानन्तपर्यायनाशे तत्कालमेव सर्वस्यापि वस्तुनो नाशप्रसङ्ग इति प्रतिवस्तुवर्णादिपर्यायानन्तकस्याऽतिमहत्त्वेन प्रतिसमयं हीयमानानन्तकस्य चाल्पीयत्वेन अवसर्पिणीसमयानां पुनरसंख्येयत्वेन उक्तदोषाप्रसक्तेः, एतेन एकस्मिन् समये प्रतिद्रव्यमेकैकपर्य्यायनाशे सर्वद्रव्यापेक्षयाऽन्तपर्यायनाश इति भ्रमोऽपि निरस्तः, विस्तारार्थिना पुनः, जम्बूद्वीपप्रज्ञप्तिसूत्रवृत्त्यादयो विलोक्याः । इति समये समयेऽनन्तहानिरिति घोषस्य शास्त्रसम्मतत्वविचारः ॥ २४ ॥

ननु कार्त्तिकश्रेष्ठिगैरिकतापससम्बन्धे, गैरिकेण प्रद्वेषात् कार्त्तिकपृष्ठौ स्थालं संस्थाप्य भुक्तमिति श्रूयते तत् क्वचित् शास्त्रेऽपि दृष्टं न वा ? उच्यते, भ्रान्तिमूलकमेवैतत् संभाव्यते, यतः सनत्कुमारचक्रिणः प्राक्तने तृतीये भवे जिनधर्मनामश्रावकस्य पृष्ठे क्षैरेयी स्थालं धृत्वा अग्निशर्मा तापसो भुक्तवान् ततस्तौ शक्रैरावणौ जातौ, इत्यादि कियत् सम्बन्धसादृश्येन, भ्रान्तितोऽत्रापि कस्यांचिदाधुनिककल्पवृत्तौ एतत्कथनं, दृश्यते परमावश्यकबृहद्वृत्ति १ पञ्चाशकविवरण २ पिंमण्डलवृत्ति ३ प्रमुखप्राक्तनग्रन्थेषु नैवं दृष्टं । तेषु तु कार्तिकेन नृपादेशात् स्वहस्तेन गैरिको भोजितस्तेन च प्रद्वेषात् तर्जन्यङ्गुलीचालनेन तर्जित इत्यादिकथनमस्ति

१ नासिकोपर्यङ्गुलीचालनेन वा ।

लेज्जा इत्यादि महामहेसुत्ति, इन्द्रमहोत्सवादिपु इत्यर्थः । इति यतनायुक्तसाधोरपि देवविशेपछलनाविचारः ॥ २२ ॥

ननु स्वकीयैकादशप्रतिमाप्रतिपत्ता, श्रावकः, सम्यक् प्रतिमोद्वहनं, कृत्वा, पश्चाद् गृहमप्यायाति न वा १ उच्यते, आयाति कश्चित् , तथा चोक्तं निशीथचूर्णौ द्वितीयखण्डे पोडशोद्देशके, साधोः पात्रगवेपणाधिकारे ॥ इदाणिं आगारे त्ति दारं अहाकडं कहिं मग्गियव्वं, अत उच्यते कोत्तियगाहा ॥ कोत्तियावणे लब्भति, सिद्धत्ति सिद्धपुत्तो जो पव्वति उकामो कते उवकरणे वाघातो से उपन्नो ताहे तं पडिग्गहमादिसाहूणं देज्ज निह्वयस्स वा पवं च समणस्स वा पासे लब्भति, समणो वासगो वा पडिमं करेउं घरं पच्छागतो तं पडिग्गहगं साधूणं दिज्जअहाकडं इत्यादि एवं वृहत्कल्पवृत्तावपि द्वितीयखण्डे, उपासकप्रतिमापञ्चाशकसूत्रवृत्त्योरपि च वोध्यम् । इति प्रतिमावहनानन्तरं कश्चित् श्राद्धो गृहमप्यायातीतिविचारः ॥ २३ ॥

ननु अस्सिन् काले समये समये अनन्तहानिरस्तीति घोपो वहुलोकप्रसिद्धः श्रूयते, स च शास्त्रानुसारी किं वा लोकोक्तिमात्रमेवेति, १ उच्यते, सांप्रतं प्रतिद्रव्यं प्रतिसमयमनन्तपर्यायहानेरागमोक्तत्वात् शास्त्रानुसारी एवायं न तु यत् किंचित्; यदुक्तं पञ्चकल्पभाष्ये"

भणियं च दूसमाए गामा होहिंति तु मसाणसमा" । इयखेत्त गुणाहाणी काले वि उ होति माहाणी ॥१॥
समये समये पंता परिहायंते उ वण्णमाईया । दव्वाइपज्जाया अहोरत्तं तत्तियं चेव ॥ २ ॥

सवसणं पजणणं छिन्नं ततो उंनिक्खंतो, सो उंनिक्खंतो, एगाए जं न गणियाए संगहितो तस्स य तत्थ तइओ नपुंसगवेदो उदिन्नो तओ इत्थिवेदो तंमिय वसणप्पदेसे अहोट्ठो भगोजातो तीए गणियाए इत्थिवेसेण स्तो ठवितो संववहरितुमाढत्तो इति ॥ तस्य एकस्मिन् जन्मनि त्रयो वेदाः प्रतिपाद्यन्ते, अनेन च क्रमेणादौ पुमं ततो अपुमं छिड्डे जाते इत्थिवेदेसमुदिन्ने ततियवेद इत्यर्थः इत्येकस्मिन्नपि भवे वेदत्रयोदय एकविंशति विचारः ॥ २१ ॥

ननु प्रमादयुक्तं सरागसंयतं अल्पर्द्धिकापि प्रत्यनीकदेवता छलयेदिति शास्त्रे श्रूयते, परं यतनायुक्तं सरागसंयतं कोऽपि छलयेन्नवा, उच्यते, यो हि अल्पर्द्धिको अर्द्धसागरोपमात् न्यूनस्थितिको देवो भवेत् स तु यतनायुक्तं साधुं छलयितुं न शक्नुयात्, यः पुनरर्द्धसागरोपमादिस्थितिकः स प्राग्भववैरस्मरणात् यतनायुक्तमपि छलयेत् तस्य सामर्थ्यसद्भावाद्, यदुक्तं निशीथचूर्णौ एकोन विंशतितमोद्देशे" पडिसिद्धकाले सज्झायं करें तस्स इमे दोसा, अन्नतरगाहा सरागसंयतो सरागत्त णतो इंदियविसयादि अन्नतरपमादजुत्तो हवेज्ज विसेसतो महामहेसु तं पमादजुत्तं पडिणीयदेवता अप्पड्ढिया खित्तादि छलणं करेज्जा, जयणाजुत्तं पुण साहुं जो अप्पड्ढितो देवो अद्धोदहीतो ऊणट्ठिती सो न सक्केति छलितुं अद्धसागरोवमट्ठितितो पुण जयणाजुत्तं पि छलेति, अत्थि से सामत्थ तं पि पुव्ववेरसंबंधसरणतो कोत्ति छ-

१ यतनायुक्त· षष्ठगुणस्थानवर्त्ती एवात्र ग्राह्यो नतु अप्रमत्तस् तस्य संहरणमपि कर्त्तुं न कोऽपि शक्नोति, यदुक्तं समणीमवगयवेय परिहारपुलायमप्पमत्तं च चउदसपुव्वि आहारगं च नयकोइसंहरइत्ति भगवतीवृत्तौ ।

पेभ्यस्त्रिचतुर्गुणबलो भवति, इयं च प्रथमसंहनिन एव भवतीत्युक्तमस्ति" इति स्त्यानर्द्धिनिद्रावतो बलभेदादिविचारः १९

ननु स्त्यानर्द्धित्रिकोदये सति जीवस्य सम्यक्त्वप्राप्तिर्भवति नवा ? उच्यते, न भवत्येव, यदुक्तमाचाराङ्गवृत्तौ तृतीयाध्ययने प्रथमोद्देशके, स्त्यानर्द्धित्रिकोदये सम्यक्त्वावाप्तिर्भवसिद्धिकस्यापि न भवतीति । किं च यदि स्त्यानर्द्धिनिद्रावतः कदाचिदज्ञानतश्चारित्रं दत्तं भवेत्तर्हि तस्य शास्त्रोक्तविधिना लिङ्गं परित्याज्यं । तद् विधिस्तु प्राक्तनप्रश्नोत्तरादवसेयः कथं तर्हि कर्मग्रन्थादौ पष्ठं प्रमत्तगुणस्थानं यावत् स्त्यानर्द्धित्रिकोदयः प्रतिपाद्यते, उच्यते, मतान्तरमेतदिति संभाव्यते, यद्वा पूर्वप्राप्तसम्यक्त्वादेः स्त्यानर्द्धिनिद्रोदयस्तत्र प्रतिपादितोऽस्ति, इति न कश्चिद् विरोधः, तत्त्वं तु ज्ञानिगम्यमिति विंशतितमोविचारः २०

ननु एकस्मिन् भवे एकजीवस्य कियतां वेदानामुदयो भवति ? उच्यते, कस्यचिद् जन्तोः कर्मगतेर्वैचित्र्यात् त्रयाणामप्युदयः संपद्यते, यथा कपिलनाम्नो लघुशिष्यस्य शय्यातरसुतायामासक्तस्य तत्पित्रा परशुछिन्नसवृषणपुंश्चिह्नस्येति, यदुक्तं निशीथचूर्णौ पीठिकायां ॥ कंमिय णिओए आयरिया बहुसिस्सपरिवारा वसंति, तंमिय गच्छे कविलो नाम खुड्डगो अत्थि, सो से ज्जायरधूयाए अज्झोववन्नो सो तं पत्थयति, सा नेच्छइ अन्नया सा कव्वट्टी दहिनिमित्तेण गोउलं गता सो वि कविलगो तं चेवं गोउलं भिक्खायरियाए पट्ठितो, सा तेण खुड्डगेण गामगोउलाण अंतरा दिट्ठा उप्पायणित्थगाहा सा तेणं तरा भारिताभावेणुप्पादिता, अणिच्छमाणी उप्पातियं वा रुहिरं अणिच्छमाणी योनिभेदेत्यर्थः ॥ तीए रेणु गुंडितगत्ताए गंतूण पिउणो अक्खायं, सो परसुकुहाडं गहाय निग्गतो दिट्ठो यणेण

दुग्गतिगमाई भेदे पडइ तहिं जत्थ सो नत्थि कोइ किर पंचसइओ सत्थो अडविं पवन्नो, तत्थ य एगो रत्तपडो निब्भग्गसिरसेहरो पंचण्हवि सयाणं पुण्णो उवहणइ, सो असत्थो तण्हाए पारद्धो दूरेअ अब्भवद्दलयं वासइ, तेसिं उवरिं ण पडइ, ते दुहा भिन्ना इयरो रत्तपडो पुव्विल्लाणं मज्झे मिलिओ सव्वत्थ पडइ, जत्थ सो तत्थ न पडइ, जाव निव्वेडिओ एकओ जाओ जत्थ सो तत्थ न पडइ, एवं एयारिसा परस्स पुण्णे उवहणंति ॥ अथ गाथाऽक्षरार्थः भिक्षुरेकः सार्थेन सार्द्धं विहं अध्वानं प्रविष्ट इति शेषः । ततः तृष्णायासार्थः प्रारब्धः । वार्दलं च वर्षितुमारब्धं यत्र येषां मध्ये सोऽभागधेयो भिक्षुस्तत्र वर्षं न पतति, ततो, द्विकत्रिकादिना द्विधात्रिधादिना प्रकारेण सार्थस्य भेदः कृतस्तस्मिंश्च कृते यत्र स भिक्षुर्नास्ति तत्र सर्वत्र वर्षं पतति, तस्योपरि न पततीत्ययं दृष्टान्तः अथ अर्थोपनयः, यथा स भिक्षुः पञ्चशतकस्यापि सार्थस्य पुण्यान्युपहतवानेवमन्येऽपि, एवंविधाः परेषां लब्धिमतामपि स्वस्वकर्मक्षयोपशमसमुत्थां लब्धिमुपघ्नन्ति, न चैतद् दृष्टान्ते नोच्यते कर्मक्षयोपशमादीनाम् द्रव्यदेशकालभावसव्यपेक्षया तत्र तत्र प्रदेशे प्रतिपादनादित्यादि, इति निर्भाग्यसंयोगाद् भाग्यवतामपि पुण्योदयविघातविचारः ॥ ३० ॥

ननु गृहस्थेन भावतीर्थकरनिमित्तं कृतं यद् अशनादि तथा तीर्थकरप्रतिमायाः पुरोढौकनार्थं कृतं यत् पक्वान्नादि तत् किं साधूनां कल्पते न वा ? उच्यते कल्पते एव, यदुक्तं, साक्षेपपरिहारं श्रीबृहत्कल्पभाष्यवृत्त्योः प्रथमखण्डे, अथ तीर्थकरप्रतिमार्थं यन्निर्वर्तितं तत् साधूनां किं कल्पते न वा' इत्याशङ्कानिरासार्थमाह ॥

तथा एकगव्यूत्युच्छ्रितानां स्थितिर्जघन्यतो देशोनं पल्यम्, उत्कर्षतः पूर्णं पल्योपममिति । इति युगलिनां जघन्योत्कृष्टायुर्विचारः ॥ २९ ॥

ननु कस्यापि निर्भाग्यस्य पुंसः संसर्गेण बहूनां भाग्यवतामपि पुण्योदय उपहन्यते न वा ? उच्यते, प्रायस्तु उपहन्यत एव यदुक्तं बृहत्कल्पवृत्तौ प्रथमखण्डे कस्याप्याचार्यस्य गच्छः सर्वोऽपि वस्त्रपात्रशय्योत्पादने अलब्धिकः, तत्र च क्षेत्रे स्वपक्षतः परपक्षतो वा अवमानं विद्यते, ते च साधवोऽनधिसहाः शीतादिपरीषहान् सोढुमसमर्थाः, गृहस्थाश्च मन्दधर्माणस्तुच्छधर्मश्रद्धाका अप्रज्ञापिताः सन्तो न वस्त्रादि प्रयच्छन्ति, शुद्धं चोपधिं साधवो गवेषयेयुरिति भगवतामुपदेशः। स च दुर्लभत्वात् यादृशेन तादृशेन साधुना न लभ्यते, अत ईदृशे कार्ये लब्धिमान् दुर्मेधा अप्युत्सारकल्पं कृत्वा वस्त्रैपणाद्यध्ययनमुद्दिश्य कल्पिकः क्रियते ततश्च कल्पिकीकृतः सन् किं करोति इत्याह"

हिण्डउ गीयसहाओ स लद्धि अह ते हणंति से लद्धिं । तो एक्कओ वि हिण्डइ आयारुस्सारियसुयत्थो ॥

गीतसहायो गीतार्थसाधुसहितो वस्त्राद्युत्पादार्थं हिण्डतां अथ ते गीतार्थास्तस्य लब्धिमुपघ्नन्ति तत एककोऽपि असहायोऽपि सङ्घाटकमन्तरेणाऽपि इत्यर्थः। कथंभूतः सन् नित्यत आह आचारोत्सारितः सूत्रार्थं आचारान्तर्गतवस्त्रैपणा पात्रैपणाद्यध्ययनसूत्रार्थमुत्सारकल्पकरणेन लेशोद्देशतो ग्राहितः सन् हिण्डते। ननु च किं कोपि कस्यापि लाभान्तरायकर्मक्षयोपशमसमुत्थां लब्धिमुपहन्ति, येनैवमुच्यते गीतार्थास्तस्य लब्धिमुपघ्नन्तीत्यत आह "भिक्खु विह तण्ह वद्दलअभागधेज्जो जहिं तहिं न पडे"

भंते महड्ढिए एवं धायई संडं दीवं जाव हंता पभू एवं जाव रुयगवरं दीवं जाव हंतापभूतेण परं वीतीव तेज्जा नो चेवणं अणुपरियट्टेज्जा इति वीतीवतेज्जत्ति, एकया दिशा व्यतिक्रामेत् नो चेवेत्यादि नैव सर्वतः परिभ्रमेत् तथाविधप्रयोजनाभावादिति संभाव्यते इतिवृत्तिः, इति महर्द्धिकदेवस्यापि रुचकद्वीपं यावत् सर्वतः परिभ्रमणविचारः ॥ ७ ॥

ननु लवणसमुद्रसंबन्धिनः कियत्प्रमाणा मत्स्या जम्बूद्वीपे जगतीरन्ध्रेण प्रविशन्ति, उच्यते, नवयोजनप्रमाणा एव तथाचोक्तं, समवायाङ्गसूत्रवृत्त्योर्नवमस्थाने ॥ नवजोयणियामच्छा ॥ इत्यादि जम्बूद्वीपे नवयोजनायामा एव प्रविशन्ति लवणसमुद्रे यद्यपि पञ्चयोजनशतिका मत्स्याः संभवन्ति, तथापि नदीमुखेषु जगतीरंध्रौचित्येन एतावतामेव प्रवेशः । इति जम्बूद्वीपप्रविशन्मत्स्यानां देहप्रमाणविचारः ॥ २८ ॥

ननु युगलिनां पल्योपमत्रयाधिका उत्कृष्टस्थितिर्बहुशास्त्रेषु श्रूयते परं जघन्यापि क्वचिदस्ति न वा १ उच्यते आगमे उभयथाप्यस्ति, तथाहि उत्कृष्टावगाहना हि मनुष्याः त्रिगव्यूतोच्छ्रयास् त्रिगव्यूतोच्छ्रितानां स्थितिर्जघन्यतः पल्योपमाऽसंख्येयभागहीनानि त्रीणि पल्योपमानि, उत्कृष्टतस्तान्येव परिपूर्णानि त्रीणि पल्योपमानि, उक्तञ्च, जीवाभिगमे । उत्तरकुरु देवकुराए मणुस्साणं भंते केवइयं कालं ठिई पन्नता गोयमा० जहन्नेणं तिण्णिपलिओवमाइं पलिओवमा संखेज्जभागहीणाइं उक्कोसेणं तिण्णिपलिओवमाइं ॥ पल्योपमाऽसंख्येयभागश्च त्रयाणां पल्योपमानामसंख्येयतमो भागः । इति प्रज्ञापनावृत्तौ पञ्चमे ५ पदे, एवं द्विगव्यूत्युच्छ्रितानां स्थितिर्जघन्यतः पल्योपमाऽसंख्येयभागहीने द्वे पल्योपमे उत्कर्षतः पूर्णे द्वे

तथा च आवश्यकबृहद्वृत्तिपाठलेशः ॥ तो पच्छाणेण परिवेसियं सो परिवसिज्जंते अंगुलिं चालेति किहते इत्यादिः
एवमन्यग्रन्थपाठोऽपि बोध्यः ॥ इति कार्त्तिकश्रेष्ठिपृष्ठौ तापसस्थालस्थापनं न प्रायः प्राक्तनग्रन्थेषु दृष्टमिति विचारः ॥ २५ ॥
ननु देवा असुराश्च यदा परस्परं युध्यन्ते तदा किं विधानि तेषाम् शस्त्राणि भवन्ति" उच्यते, देवास्तु यानि तृणकाष्ठादीनि
स्पृशन्ति तान्येव तेषां शस्त्रतया परिणमन्ति अचिन्त्यपुण्यप्रभावाद्, असुराणां पुनर्नित्यं विकुर्वितानि आयुधरत्नानि भवन्ति, देवा-
पेक्षया तेषां मन्दतरपुण्यत्वात्, नतु तृणादीनि स्पृष्टमात्राणि शस्त्रतया परिणमन्तीति । यदुक्तं श्रीमद्भगवत्यामष्टादशे शते सप्तमो-
देशके, ॥ देवासुरेसु णं भंते संग्गामेसु वट्टमाणेसु किं णं तेसिं देवाणं पहरणरयणत्ताए परिणमंति, गोयमा० जण्णं
ते देवा तणं वा कट्ठं वा पत्तं वा सक्करं वा परामुसंति तंणं तेसिं देवाणं पहरणरयणत्ताए परिणमंति, जहेव दे-
वाणं तहेव असुरकुमाराणं नो ति णट्ठे समट्ठे असुरकुमाराणं देवाणं णिच्चं विउव्विया पहरणरयणा पण्णत्ता ॥
इति देवासुरयुद्धे आयुधविशेषविचारः ॥ २६ ॥

ननु महर्द्धिको देवः कियतो द्वीपसमुद्रान् समन्तात्परिभ्रम्य सद्यः पश्चादागन्तुं समर्थः । इति चेदुच्यते, रुचकवरद्वीपं यावत्
अनुपर्यटितुं समर्थः, ततः परं तु एकया कयाचिद् दिशा गच्छेत्, नतु सर्वतः परिभ्रमेत्, यदुक्तं भगवत्यङ्गे, अष्टादशशतके सप्तमो-
द्देशे "देवेणं भंते महड्डिए जाव महेसक्खे पभूलवणसमुद्दं अणुपरियट्टित्ताणं हव्वमा गच्छित्तए" हंता पभू देवेणं

१ एवं कल्पलतायामपि ।

पदे प्रथमोद्देशे । यत्तु भगवतीवृत्तौ द्वितीयशतके चतुर्थोद्देशके, सर्वस्तोकं चक्षुरवगाहतः ततः श्रोत्रघ्राणरसनेन्द्रियाणि क्रमेण संख्यातगुणानि स्पर्शनं त्वसंख्येयगुणमिति उक्तं तत्र लेखकभ्रमः संभाव्यते अतएवोक्तं प्रज्ञापनावृत्तौ, यस्तु दृश्यते पुस्तकेषु पाठो जिह्वेन्द्रियं संख्येयगुणमित्यादिः सोऽपपाठो युक्त्यनुपपन्नत्वादित्यादि, विस्तारार्थिना तु सैव विलोक्या अङ्गुलशब्देन तु प्रायोऽत्र आत्माङ्गुलमेव ग्राह्यम्, यदुक्तं प्रज्ञापनावृत्तावेव "सोइंदिएणमित्यादि" इह पृथुत्वं स्पर्शनेन्द्रियव्यतिरेकेण शेषाणामिन्द्रियाणामात्माङ्गुलेन प्रतिपत्तव्यम् स्पर्शनेन्द्रियस्य तदुच्छ्रयाङ्गुलेनेत्यादि अत्राक्षेपपरिहारविस्तारस्तु तत एवावसेयः, बृहत्कल्पवृत्तावप्युक्तं श्रोत्रादीन्द्रियप्रमाणं श्रोत्रादीन्द्रियप्रमाणंचात्माङ्गुलत इत्यादि। इति इन्द्रियाणां विस्तारादिप्रमाणविचारः ॥ ३४ ॥

ननु मनुष्यलोके कल्पवृक्षाः सचित्ता अचित्ता वा ? वनस्पतिविशेषाः पृथ्वीमया वा २ विस्रसापरिणामपरिणता देवाधिष्ठिता वा ३ इति, चेदुच्यते । कल्पवृक्षा हि सचित्ता वनस्पतिविशेषा युगलिनां पुण्यप्राग्भारोदयात् स्वभावेनैव तथाविधपरिणामपरिणताश्च सन्ति ।

ननु तद्विपरीता इति ज्ञायते, आचाराङ्गवृत्त्यादौ तथैव दर्शनात् तथा च तत्पाठः । तत्र प्रधानाग्रं सचित्तादि त्रिधा सचित्तमपि द्विपदादिभेदात् त्रिधैव तत्र द्विपदेषु तीर्थकरश्चतुष्पदेषु सिंहः, अपदेषु कल्पवृक्षः, अचित्तं वैडूर्यादि, मिश्रं तीर्थकर एवालंकृतः इत्याचाराङ्गवृत्तौ द्वितीयश्रुतस्कन्धपीठिकायां तथा जम्बूद्वीपप्रज्ञप्तिसूत्रवृत्त्योर्वृक्षाधिकारे स्वभावतः फलपुष्पशालिनः कल्पवृक्षाः प्रोक्ताः सन्ति तथा च तत्पाठलेशः ॥

मपि लभन्ते तथा एकस्मिन् परमाणौ कति पर्याया भवन्ति १ उच्यते द्रव्यतः परमाणुर्नित्यः, पर्यायतस्तु अनित्योऽस्ति, अत एव तद्गता वर्णादिपर्याया अपि स्वयमेव एके नश्यन्ति अन्ये चोत्पद्यन्ते, यदुक्तं श्रीभगवत्यङ्गे ॥ परमाणुपुग्गलेणं भंते सासए असासए गोयमा सिअ सासए सिअ असासए से केणट्ठेणं भंते एवं वुच्चति गोयमा, दव्वट्ठयाए सासए पज्जवट्ठयाए असासए इत्यादि । यत्तु केचिद् परमाणोर्नित्यत्वेन तत्पर्यवाणाम नित्यत्वं मन्यन्ते, तदसत् पञ्चमाङ्गे स्पष्टम् अनित्योक्तेः, उक्तश्च, अस्य शाश्वतभावेन केचित् पर्यवनित्यताम् मन्यन्ते तद् असद् यस्मात् पञ्चमाङ्गे स्फुटं श्रुतं ? तथा एकैकस्मिन् परमाणौ अनन्ताः पर्यवा भवन्ति, श्रीप्रज्ञापनासूत्रवृत्त्योः पञ्चमे विशेषाख्ये पदे तथैवोक्तत्वात् तत्पाठस्तु तत एवावसेयः। इति परमाणुस्थवर्णादिपर्यायपरावर्त्तादिविचारः ॥ ३३ ॥

ननु सर्वाणि इन्द्रियाणि अनन्तप्रदेशनिष्पन्नानि अङ्गुलासंख्येयभागवाहल्यानि असंख्येयप्रदेशावगाढानि उक्तानि विस्तारस्तु श्रोत्रचक्षुर्घ्राणानाम् अङ्गुलासंख्येयभागो जिह्वेन्द्रियस्याङ्गुलपृथक्त्वं स्पर्शनेन्द्रियस्य च शरीरमान उक्तस्तत्र श्रोत्रादीनाम् त्रयाणां विस्तारस्तुल्य एव किंवा एकैकस्मादल्पो बहुर्वा इति ? चेदुच्यते सर्वस्तोकप्रदेशावगाढं चक्षु ततः श्रोत्रं संख्येयगुणमवगाहतः प्रभूतेषु प्रदेशेषु तस्यावगाहनोपपत्तेः, ततो घ्राणं संख्येयगुणं, ततोऽपि जिह्वेन्द्रियमसंख्येयगुणं तस्याङ्गुलपृथक्त्व विस्तारात्मकत्वात् ततः स्पर्शनेन्द्रियं संख्येयगुणं ननु असंख्येयगुणमुत्कर्षतोऽपि लक्षयोजनप्रमाणत्वादित्यादि प्रज्ञापनावृत्तौ पञ्चदशे इन्द्रियाख्ये

१ उत्कर्षत. परमाण्वादीना स्थिति. असंख्येया उत्सर्पिण्यो अवसर्पिण्यश्च भवति २ चतुर्दशशते चतुर्थोद्देशके

इच्चाइ कप्प भणियाणुसारओ तत्थ दाउमु वओगं गिह्णंति मुणी किंचिवि तेसिं सुहभाववुड्ढित्थं ॥ २० ॥
पूयादाणफलेणं तेणं तिह्णंपि तेसिं संजायं राय कुले भोगफलं जम्ममहोपूयमाहप्पं ॥ २१ ॥
इत्यादि इति तीर्थकरतत्प्रतिमानिमित्तकृतपकान्नादि साधूनां कल्प्यमिति विचारः ॥ ३१ ॥

ननु महर्द्धिका देवाः बाह्यपुद्गलान् गृहीत्वैव गमनागमनभाषणव्याकरणोन्मेषनिमेषाकुञ्चनप्रसारणस्थानशयननिषदनविकुर्वाणाः परिचारणादिक्रियाः कुर्वन्ति किम्वा महर्द्धिकत्वादेव बाह्यपुद्गलग्रहणं विनापि कुर्वन्तीति १ उच्यते देवादयः सर्वेऽपि संसारिणो बाह्यपुद्गलान् गृहीत्वा एव गमनादिकं कर्तुं समर्थाः स्युः, न पुनस्तद् ग्रहणं विनेति, यदुक्तं भगवत्यां षोडशशते चतुर्थोदेशके ॥ देवेणं भंते महिड्ढिए जाव महे सक्खे बाहिरए पोग्गले परियादित्ता पभूआगमित्तए हंतापभू देवेणं भंते महिड्ढिए एवं एतेणं अभिलावेणं गमित्तए २ एवं भासित्तए वा वागरेत्तए वा ३ ओमिसावित्तए वा निमिसावित्तए वा ४ आउंटावेत्तए वा पसारेत्तए वा ५ ठाणं वासेज्ज वा निसीहियं वा चेयत्तए ६ एवं विउव्वित्तए, एवं परियारेत्तए ८ जावहंता पभू इत्यादि । अत्र वृत्तिः, इह सर्वोऽपि संसारी बाह्यान् पुद्गलान् अनुपादाय न काञ्चित् क्रियां करोतीति सिद्धमेव, किन्तु देवः किल महर्द्धिको महर्द्धिकत्वादेव च गमनादिक्रियां मा कदाचित्करिष्यतीति संभावनायां शक्रः प्रश्नं चकारेत्यादि, इति देवादीनां बाह्यपुद्गलग्रहणं विना न गमनादि क्रियेति विचारः ॥ ३२ ॥

ननु परमाणुपुद्गलो नित्योऽनित्यो वा पुनः परिमाणुस्था वर्णादिपर्यवाः सदा स्वभावेनैवावतिष्ठन्ते किं वा कदाऽपि विपर्यय-

संवट्टमेहपुप्फा सत्थनिमित्तं कया जइ जईणं। नहु लब्भा पडिसिद्धुं किं पुण पडिमट्ठमारद्धं

शास्ता तीर्थकरस्तस्य निमित्तं यानि देवैः संवर्त्तकमेघपुष्पाणि, समवसरणभूमौ कृतानि तानि यतीनाम् यदि प्रतिषेद्धुं न लभ्यानि तेषां तत्रावस्थातुं यदि कल्पते इति भावः। तर्हि किं पुनः प्रतिमार्थम्, अजीवानां प्रतिमानां हेतोरारब्धं तत् सुतरां न कल्पते? उच्यते.

साहंमिओ न सत्था तस्स कयं तेण कप्पइ जईणं। जं पुण पडिमाण कयं तस्स कहा का अजीवत्ता।

शास्ता तीर्थकरः स साधर्मिको लिंगतः प्रवचनतोऽपि न भवति, तथा हि लिङ्गतः साधर्मिकः स उच्यते, यो रजोहरणादिलिङ्गधारी भवति तच्च लिङ्गमस्य भगवतो नास्ति तथा कल्पत्वात्, अतो न लिङ्गतः साधर्मिकः, प्रवचनतो ऽपि साधर्मिकः सोऽभिधीयते यश्चतुर्वर्णसंघाभ्यन्तरवर्त्ती भवति "पवयणसंघोगयरे" इति वचनात् भगवांश्च तत् प्रवर्त्तकतया न तदभ्यन्तरवर्त्ती किन्तु चतुर्वर्णस्याधिपतिः, ततः प्रवचनतोऽपि न साधर्मिकस्ततस्तीर्थकरस्यार्थाय कृतं यतीनां कल्पते चेत्पुनः प्रतिमानामर्थाय यत्कृतं तस्य का कथा का वार्त्ता सुतरां तत् कल्पते कुत इत्याह अजीवत्वात्, जीवमुद्दिश्य हि यत्कृतं तदाधाकर्मकं भवति ॥ जीवं उद्दिस्सकडं इति प्रागेवोक्तत्वात्, तच्च जीवत्वमेव प्रतिमानां नास्तीति, तथा चैत्यवन्दनभाष्यस्य संघाचारवृत्तावपि उक्तं

साहंमिओ न सत्था०१८ संवट्टमेहपुप्फा० १९

सूरंतरिया चंदा चंदंतरिया य दिणायरा दित्ता ॥ इत्यादि रूपं तत्कथं संगच्छते युक्त्ययोगात् ततश्च तथा तेषाम् अवस्थितिर्वक्तव्या यथाऽनन्तरोक्तमन्तरं सम्यक् संजाघटीति, इति चेच्छृणु, मनुष्यक्षेत्राद् बहिश्चन्द्रार्काः कथं व्यवस्थिता इति चन्द्रप्रज्ञप्त्यादौ नोक्तं किन्तु अन्तरमात्रमुक्तं ततो नैतदस्मादृशैर्निश्चेतुं शक्यते, संग्रहिणीवृत्त्यादावपि इत्थमेव उक्तत्वात् लोकप्रकाशकारेणापि एवमेवोक्तम् तथाहि

अनन्तरनरक्षेत्रात् सूर्यचन्द्राः कथं स्थिताः । तदागमेषु गदितं सांप्रतं नोपलभ्यते ॥ २२ ॥
केवलं चन्द्रसूर्याणां यत् प्राक् कथितम् अन्तरं । तदेव सांप्रतं चन्द्रप्रज्ञप्त्यादिषु दृश्यते ॥ २३ ॥
एषां संभाव्यते चन्द्रप्रज्ञप्त्याद्यनुसारतः सूचीश्रेण्या स्थितिर्नैव श्रेण्या परिरयाख्यया, ॥ २४ ॥
यथाऽऽगमं भावनीयम् अन्यथा वा बहुश्रुतैः श्रेयसेऽभिनिवेशोऽर्थेन ह्यागमादिनिश्चितेः ॥ २५ ॥

इत्यादि चतुर्विंशतिसर्गे ॥ २४ ॥ केचित्तु आचार्या अत्र परिरयश्रेणीमेव अङ्गीकुर्वन्ति तन्मतप्रतिपादकं च चउयालसयंपढमिल्लुयाए इत्यादि गाथाद्वयं, पुनरत्र भूयान् विस्तारोऽस्ति तदर्थिना तु संग्रहिणीवृत्तिः लोकप्रकाशो वा विलोकनीयः किञ्च श्रीहेमाचार्यैरपि योगशास्त्रचतुर्थप्रकाशवृत्तौ परिरयश्रेण्यभिप्रायेणैव उक्तम् तथाहि, मानुषोत्तरात् परतः पञ्चाशतयोजनसहस्रैः परस्परम् अन्तरिताः चन्द्रान्तरिताः सूर्याः सूर्यान्तरिताश्चन्द्राः मनुष्यक्षेत्रीयचन्द्रसूर्यप्रमाणात् यथोत्तरं क्षेत्रपरिधेर्वृद्ध्या

ननु जम्बूद्वीपलवणसमुद्रगताः चन्द्रादयो यथा जम्बूद्वीपस्थं मेरुं प्रदक्षिणयन्तश्चरन्ति तथा धातकीखण्डादिद्वीपसमुद्रवर्त्तिनोऽपि चन्द्रादयस्तमेव मेरुं प्रदक्षिणी कुर्वन्तो भ्रमन्ति किं वा स्वस्वद्वीपगतं मेरुमिति, चेदुच्यते! मनुष्यक्षेत्रवर्त्तिनः सर्वेऽपि चन्द्रादयो जम्बूद्वीपस्थमेव मेरुं प्रदक्षिणयन्तः परिभ्रमन्ति न तु स्वं स्वमेव, यदुक्तं संग्रहिणीवृत्तौ। दोससीत्यादि। द्वे चन्द्रपङ्क्ती द्वे च सूर्यपङ्क्ती यथाक्रममेकया सूर्यपङ्क्त्या चन्द्रपङ्क्त्या चान्तरिते प्रत्येकं षट्षष्ठिचन्द्रसंख्ये षट्षष्ठिरविसंख्ये च जम्बूद्वीपगतं मेरुं प्रदक्षिणयन्तौ परिसमन्तादटतो भ्रमतः इत्यादि ॥ इति मनुष्यक्षेत्रवर्त्तिचन्द्रादीनां सुदर्शनमेरुप्रदक्षिणापरिभ्रमण विचारः ॥ ४० ॥

ननु मनुष्यक्षेत्राद् वहिःस्थितानां चन्द्रार्काणां कया व्यवस्थया अवस्थितिः, सूचीश्रेण्या परिरयश्रेण्या वा इति, चेदुच्यते ? चन्द्रप्रज्ञप्तिजीवाभिगमसंग्रहिणीसूत्राद्यनुसारतस्तु सूचीश्रेण्या एषां स्थितिः संभाव्यते, न परिरयश्रेण्या इति, यदुक्तं, जीवाभिगमवृत्तौ सूर्यसूर्यान्तरसूत्रव्याख्याने ? एतच्चैवमन्तरपरिमाणं सूचीश्रेण्या प्रतिपत्तव्यं, न वलयाकारश्रेण्येति, एवं संग्रहिणीवृत्त्यादावपि बोध्यम्, एवं तर्हि मनुष्यक्षेत्राद् वहिरष्टलक्षयोजनप्रमिते पुष्करार्धे चतुर्दिक्षु पङ्क्तिचतुष्टये स्थितानां द्वासप्ततेश्चन्द्राणां द्वासप्ततेश्च सूर्याणां, यदुक्तं, चन्द्रप्रज्ञप्त्यादावन्तरं,

चंदाओ सूरस्स य सूरा चंदस्स अंतरं होइ। पन्नाससहस्साइं जोअणाणं अणूणाइं ?।

सूरस्स य सूरस्स य ससिणो ससिणो य अंतरं दिट्ठं। वहिया माणुस नगस्स जोयणाणं सयसहस्सं ॥ २ ॥

चिह्नं, एवं सूर्यग्रहनक्षत्रताराणामपि स्वस्वमण्डलाकारं चिह्नं वाच्यं तथाच तत्त्वार्थभाष्यं, मुकुटेषु शिरोमुकुटोपगूहिभिः प्रभामण्डलकल्पैरुज्ज्वलैः सूर्यचन्द्रग्रहनक्षत्रतारामण्डलैः यथा स्वचिह्नैः विराजमाना द्युतिमन्तो ज्योतिष्काः भवन्तीति" अत्र शिरोमुकुटोपगूहिभिरिति, मुकुटाग्रभागवर्त्तिभिरित्यर्थः । इति संग्रहिणीवृत्तौ, जीवाभिगमवृत्तौ पुनरयं विशेषः, चन्द्रस्य मुकुटे चन्द्रमण्डलंलाञ्छनं स्वनामाङ्कप्रकटितम्, एवं सूर्यादेरपि इत्यादि, एवं प्रज्ञापनायामपि ज्ञेयम्, इति ज्योतिष्काणां वर्णचिह्नविचारः ॥ ३७ ॥

ननु "जोयणिगसट्ठि भागा" इत्यादि संग्रहिणीगाथायां ताराविमानानां क्रोशार्द्धमायामविस्तारावुक्तौ क्रोशचतुर्भागश्चोच्चत्वं तत्किमेतत् प्रमाणतो न्यूनप्रमाणं ताराविमानं न भवति, इति चेत् शृणु' इदं चेह ताराणां विमानेषु आयामविष्कम्भोच्चत्वंमानमुत्कृष्टस्थितीनाम् उक्तमस्ति जघन्यस्थितीनां त्वायामविष्कम्भमानं पञ्चधनुःशतानि, उच्चत्वं त्वर्द्धतृतीयानि धनुः शतानि तथाचोक्तम्, तत्त्वार्थभाष्ये सर्वोत्कृष्टाया स्ताराया अर्द्धकोशः, जघन्यायाः पञ्चधनुःशतानि विष्कम्भार्द्धवाहल्याश्च भवन्ति, सर्वे सूर्यादयो नृलोके इत्यादि ॥ इति ताराविमानप्रमाणद्वैविध्यविचारः ॥ ३८ ॥

ननु मनुष्यक्षेत्राद् बहिर्वर्त्तिनां चन्द्रादीनां विमानानि मध्यगेभ्योऽर्द्धप्रमाणानि उक्तानि परं तदायुः किं प्रमाणमिति चेत्, शृणु, आयुस्तेषां मध्यगैस्तुल्यमेव, न तु किंचिदपि न्यूनं, यदुक्तं संग्रहिणीवृत्तौ पञ्चमगाथाव्याख्याने अशेषासंख्येयद्वीपसमुद्रवर्त्तिचन्द्रविमानवासिदेवानाम् वर्षाणां लक्षेणाधिकं पल्योपमम् उत्कृष्टमायुरित्यादि, इति चरस्थिरचन्द्रादीनां तुल्यायुष्कताविचारः ॥ ३९ ॥

मत्तंगया वि दुमगणा अणेगबहुविविह वीससा। परिणयाए मज्जविहीए उववेयाफलेहिं पुन्ना विसट्टंतीत्यादि तेषां फलानि परिपाकागतमद्यविधिभिः पूर्णानि स्फुटित्वा स्फुटित्वा तान् मद्यविधीन् मुञ्चन्तीत्यादिवृत्तिः, विस्तरार्थिना पुनर्जीवाभिगमप्रवचनसारोद्धारवृत्त्यादयो विलोक्या, योगशास्त्रवृत्तौ चतुर्थप्रकाशेऽप्युक्तं, धर्मप्रभावतः कल्पद्रुमाद्या ददति इप्सितमित्यादि, कल्पद्रुमः कल्पवृक्षः आदि शब्दात् चिन्तामण्यादयः परिगृह्यन्ते ते वनस्पतिरूपा उपलरूपाश्च इत्यादि, जम्बूधातकीशाल्मलीप्रमुखाः कुरुवृक्षास्तु रत्नादिपृथ्वीमया ज्ञेयाः, इति कल्पवृक्षा वनस्पतिमया विस्रसापरिणता नतु देवाधिष्ठिता इत्यादि विचारः ॥ ३५ ॥

ननु कुक्कुटमयूरयोः शिरःस्था शिखा सचित्ता अचित्ता मिश्रा वा इति, चेदुच्यते, कुक्कुटस्य शिखा सचित्ता, मयूरस्य तु मिश्रा इति जानीहि यदुक्तं श्रीमदाचाराङ्गवृत्तौ द्वितीयश्रुतस्कन्धपीठिकायां तत्र चूडाया निक्षेपो नामादिः षड्विधः नामस्थापने क्षुण्णे, द्रव्यचूडाव्यतिरिक्ता सचित्ता कुक्कुटस्य, अचित्ता मुकुटस्य चूडामणिर्मिश्रा मयूरस्य, क्षेत्रचूडालोकनिष्कुटरूपा काल चूडाऽधिकमासस्वभावा इत्यादि, इतिकुक्कुटमयूरयोः शिखायाः सचित्तत्वादिविचारः ॥ ३६ ॥

ननु असुरादीनान्तु वर्णचिह्नादिस्वरूपं संग्रहिण्यादौ स्पष्टमेव निर्दिष्टमस्ति परं ज्योतिष्काणां शरीरं किं वर्णं किञ्चैतेषां मुकुटेषु चिह्नमिति ? चेदुच्यते चन्द्रसूर्यग्रहनक्षत्रतारारूपाः पञ्चज्योतिष्काः एतेषु च तारकाः पञ्चवर्णाः शेषाः पुनरुत्तप्तकनकवर्णाः सर्वेऽपि चैते विशिष्टवस्त्राभरणभूषणाः, मुकुटमण्डितमौलयः केवलं चन्द्राणां मुकुटाग्रभागे प्रभामण्डलस्थानीयम् चन्द्रमण्डलाकारं

उत्तराणं मंजुघोसा इत्यादि बहुसूत्रं तच्च तत एव अवसेयम्, क्वचित् तु चतुर्विधदेवानां भिन्नमेव चतुर्विधं वादित्रम् उक्तमस्ति तथा च तत् प्रतिपादिका अदृष्टमूला इयं गाथा ।

सुणिऊण संखसद्दं मिलंति भवणाय वंतरा पडहं । जोइसियसिंहनादं घंटा वेमाणिया देवा [1] ।

इति अस्या मूलमन्वेष्यमिति चतुः षष्ठेरिन्द्राणां घण्टा तद्वादकदेवनामादिविचारः ॥ ४३ ॥

ननु एवं देवान् संमील्य चतुःषष्ठिरिन्द्रा यानि विमानान्यारुह्य इह आगच्छन्ति तद् विमानकारका देवाः किं नामनः-किञ्च विमानप्रमाणं किं प्रमाणश्च महेन्द्रध्वजोऽग्रे चलतीति १ चेदुच्यते दशानां वैमानिकेन्द्राणाम् यानविमानकारकास्तु देवा अमी, पालकः १ पुष्पकः २ सौमनसः ३ श्रीवत्सः ४ नन्दावर्त्तः ५ कामगमः ६ प्रीतिगमो, मनोरमो ८ विमलः ९ सर्वतोभद्रश्चेति १० भवनपतिव्यन्तरज्योतिष्केन्द्राणां तु सर्वेषाम् विमानकारिणोऽनियतनामानः स्वाम्यादिष्टा आभियोगिका देवा ज्ञातव्याः, तथा वैमानिकेन्द्राणां दशानामपि यानविमानानि आयामविस्ताराभ्यां लक्षयोजनप्रमाणानि उच्चैस्त्वेन स्वविमानप्रमाणानि महेन्द्रध्वजाश्चाप्तीषाम् उच्चैस्त्वेन एकयोजनसहस्रप्रमाणाः, तथा असुरेन्द्रयोर्यानविमानम् पञ्चाशद्योजनसहस्राणि विस्तीर्णं महेन्द्रध्वजश्च पञ्चयोजनशतोच्चः शेषाणां धरणाद्यष्टादशेन्द्राणां विमानानि पञ्चविंशति योजनसहस्रविस्तीर्णानि महेन्द्रध्वजाश्च अर्धतृतीययोजनशतोच्चाः, तथा व्यन्तरज्योतिष्केन्द्राणां विमानानि एकयोजनसहस्रविस्तीर्णानि महेन्द्रध्वजाश्च पञ्चविंश-

[1] दिगंबर मतोक्ता इयं गाथा

पराक्रमं नाम पदात्यनीकाधिपतिं देवम् आज्ञाप्य स्वां स्वां महाघोषानामघण्टां वादयन्ति, एवम् असुरेन्द्रयोः चमरबलिनाम्नोः क्रमेण द्रुममहाद्रुमौ पदात्यनीकाधिपती, ओघस्वरामहौघस्वराख्यम् घण्टाद्वयं तथा, नागेन्द्रयोः मेघस्वरा घण्टा, सुपर्णेन्द्रयोर्हंसस्वरा, विद्युत्कुमारेन्द्रयोः क्रौञ्चस्वरा, अग्निकुमारेन्द्रयोर्मंजुस्वरा, दिक्कुमारेन्द्रयोः मञ्जुघोषा, उदधिकुमारेन्द्रयोः सुस्वरा, द्वीपकुमारेन्द्रयोर्मधुरस्वरा, वायुकुमारेन्द्रयोर्नन्दिस्वरा, स्तनितकुमारेन्द्रयोर्नन्दिघोषा घण्टा ज्ञातव्या ? तथा दाक्षिणात्यानां नवानामपि धरणेन्द्रादीनां पदात्यनीकाधिपतिर्भद्रसेनः, उत्तराहाणाम् च भूतानन्दादीनां नवानां दक्षनामा स बोध्यः, तथा व्यन्तरेन्द्रा द्वात्रिंशत् तेषु दाक्षिणात्यानां षोडशेन्द्राणां मञ्जुस्वरा घण्टा, उत्तराहाणां तु मञ्जुघोषा, पदात्यनीकाधिपतयश्चामीषाम् अनियतनामन आभियोगिका देवाः, ज्योतिष्केन्द्रयोः सुस्वरासुस्वरनिर्घोषे घण्टे क्रमेण ज्ञातव्ये पदात्यनीकाधिपती प्राग्वत् तथाच उक्तं जम्बूद्वीपप्रज्ञस्युपाङ्गे प्रथमजिनजन्माधिकारे। **सोहम्मगाणं सणंकुमारगाणं बंमलोयगाणं महासुक्कयाणं पाणयगाणं इंदाणं सुघोसा घंटा हरिणेगमेसीपायत्ताणीआहिवई उत्तरिल्लाणिज्जाणभूमी दाहिण पुरछिमिल्ले-रइकरगपव्वए ईसाणगाणं माहिंद लंतग सहस्सार अच्चुअगाण य इंदाणं महाघोसा घंटा लहुपरक्कमो पायत्ताणीआहिवई दाहिणिल्लेणिज्जाणमग्गो उत्तरपुरिच्छिमिल्ले रइकरगपव्वए इत्यादि, असुराणं ओघस्सरा घंटा णागाणं मेघस्सरा सुवण्णाणं हंसस्सरा विज्जूणं कोंचस्सरा अग्गीणं मंजुस्सरा दिसाणं मंजुघोसा उदहीणं सुस्सरा दीवाणं महुरस्सरा वाऊणं णंदिस्सरा थणिआणं नंदिघोसा इत्यादि वाणमंतराणं दाहिणाणं मंजुस्सराः**

वसो भवति, एवं जम्बूद्वीपे शीतर्त्तौ यदा सर्वोत्कृष्टाऽष्टादशमुहूर्त्ता रात्रि र्भवति तदा भरतादौ अन्यतरस्मिन् क्षेत्रे रजन्या मुहूर्त्तत्रिके अतिक्रान्ते सति विदेहादौ सूर्य उदयं याति, तथा रात्रे र्मुहूर्त्तत्रिके शेषे सति अस्तं याति ? एवं च सर्वत्र तुल्या रात्रिर्भवति, एतावता ग्रीष्मर्त्तौ सर्वोत्कृष्टदिने आद्यन्तमुहूर्त्तषट्के सर्वक्षेत्रेषु दिनं भवति सूर्यस्य सर्वाभ्यन्तरमण्डलवर्त्तित्वात्, तथा शीतर्त्तौ सर्वोत्कृष्टरात्रौ आद्यन्तमुहूर्त्तषट्के सर्वत्र रात्रिर्भवति, सूर्यस्य सर्ववाह्यमण्डलवर्त्तित्वादिति, नात्र कश्चिद् विरोधः यदुक्तमागमे ॥

पुव्वविदेहे सेसे मुहुत्ततिगे वासरे निरक्खंति । भरहनरा उदयंतं सूरं कक्कस्स पढमदिणे ॥ १ ॥
भरहे वि मुहुत्ततिगे सेसे पच्छिमविदेहमणुआ वि । एरवए वि अ एवं तेण दिणं सव्वओ तुल्लं ॥ २ ॥
जंबुद्दीवे नयरे रयणीइ मुहुत्त तिगे अइक्कंते । उदये तहेव सूरो मुहुत्ततिगे सेसे अत्थमओ ॥ ३ ॥

इत्यादि, इति विदेहभरतादौ दिनरात्रिविचारः ॥ ४२ ॥

ननु यदा सौधर्मेन्द्रो जिनजन्मादिषु इह आगच्छति तदा स्वपदात्यनीकाधिपतिम् आज्ञाप्य सुघोषाघण्टावादनेन स्वदेवलोकवासिदेवान् आकारयतीति प्रसिद्धमेव, परमन्ये त्रिषष्टिरिन्द्राः कं देवम् आज्ञाप्य किं नामकं च वादित्रं वादयित्वा स्वस्वस्थानवासिदेवान् आकारयन्ति ? इतिचेद् ? उच्यते, सौधर्मसनत्कुमारब्रह्ममहाशुक्रप्राणतेन्द्राः स्वस्वपदात्यनीकाधिपतिं हरिणैगमेषिदेवम् आज्ञाप्य स्वां स्वां सुघोषां घण्टां वादयन्ति, तथा ईशान २ माहेन्द्र ४ लान्तक ६ सहस्रारा ५ ऽच्युतेन्द्राः १२ स्वस्वलघु-

संख्येया वर्द्धमानाः शुभलेश्या ग्रहनक्षत्रतारापरिवारा घण्टाकारा असंख्येया आस्वयंभूरमणात् लक्षयोजनान्तरिताभिः, पंक्तिभिः, तिष्ठन्तीति तथा तैरेव कृते परिशिष्टपर्वण्यपि यथा,

तत्र राजतसौवर्णैः प्रकारः कपिशीर्षकैः । भाति चन्द्रांशुमद्‌बिम्बैर्मर्त्त्योत्तर इवाचलः ॥ २० ॥

इति राजगृहवर्णने एवमत्र बहूनि मतान्तराणि सन्ति, तत्र तत्त्वं तु केवलिगम्यम्, इति मनुष्यक्षेत्रात् बहिश्चन्द्रसूर्याणाम् अवस्थितिविचारः ॥ ४१ ॥

ननु यदा भरतैरावतक्षेत्रयोर्दिनं भवति तदा महाविदेहक्षेत्रे रात्रिः स्यात् यदा च तयो रात्रिस्तदा विदेहे दिनमिति सर्वत्र प्रसिद्धमेव, पुनर्यस्मिन् दिने भरतादौ वर्षादय ऋतवः प्रादुर्भवन्ति तस्मिन् एव दिने विदेहेऽपि, श्रीभगवत्यां भरताद्यपेक्षया समयानन्तरं विदेहे वर्षाद्यृतुयोगस्य उक्तत्वात्, ततश्च यदा भरतादौ सर्वोत्कृष्टोऽष्टादश²मुहूर्त्तो दिवसो भवति, तदा विदेहे एतत्प्रमाणा रात्रिः प्रसज्येत तथा ऋतुभेदात् कथं नागमविरोधः, इति चेन्मैवं वद, कर्कसंक्रान्तेः ¹प्रथमदिने पूर्वमहाविदेहे क्षेत्रे मुहूर्त्तत्रिकप्रमाणे दिवसे शेषे सति भरतक्षेत्रनरा, उदयन्तं सूर्यं पश्यन्ति, भरतेऽपि मुहूर्त्तत्रिके दिवसे शेषे सति पश्चिममहाविदेहमनुष्या अपि उदयन्तं सूर्यं पश्यन्ति। एवं तदैव पश्चिममहाविदेहे मुहूर्त्तत्रिके दिने शेषे सति ऐरावतक्षेत्रनरा उदयन्तं सूर्यं पश्यन्ति, ऐरावतेऽपि मुहूर्त्तत्रिके दिने शेषे सति पूर्वविदेहनरा उदयन्तं सूर्यं पश्यन्ति, तेन सर्वक्षेत्रेषु तुल्यप्रमाण एव दि-

---

१ ग्रीष्मर्तौ. २ अष्टादशमुहूर्त्ते दिने इत्यर्थ..

सव्वे सव्वद्धाए सव्वन्नू सव्वकम्मभूमीसु । सव्वगुरू सव्वमहिया सव्वमेरुंमि अभिसित्ता ॥ १ ॥
सव्वाहि वि लद्धीहिं सव्वे वि परीसहे पराइत्ता । सव्वे वि य तित्थयरा पाओवगयाउ सिद्धिगया ॥२॥
अवसेसा अणगारा तीयपडुप्पन्नणागया सव्वे । केई पाओवगया पच्चक्खाणेंगिणिं केई ॥ ३ ॥
सव्वाओ अज्जाओ सव्वे वि य पढम संघयणवज्जा । सव्वे य देसविरया पच्चक्खाणेण उमरंती ॥ ४ ॥

तथाऽस्यां चतुर्विंशतिकायां श्रीऋषभो १ नेमि २ वीरश्चेति ३ त्रयो जिनाः पर्यङ्काऽऽसनस्थिता मुक्तिं गता अवशेपास्तु जिनाः कायोत्सर्गस्था एव मुक्तिं गता, यदुक्तं, सप्ततिशतस्थानके ?

वीरोसहनेमीणं पलिअंकं सेसयाण उसग्गो । पलियंकासणमाणं सदेहमाणातिभागूणंति ॥ १ ॥

ननु श्रीवीरो देशनां ददान एव सिद्धस्ततः कथं तस्य पादपोपगमनं संगच्छते, इति चेदुच्यते, भगवान् पादपोपगमनमङ्गीकृत्य निश्चलीकृतसर्वाङ्गोपाङ्गः प्रत्याख्यातचतुर्विधाऽऽहारः षोडशप्रहारान् अस्खलितदेशनां दत्त्वा सिद्ध इति, न काऽपि असंगतिः, इति तीर्थकरादीनामनशनासनादिविचारः ॥ ५० ॥

ननु अष्टापदगिरेस्तदुपरिस्थजिनचैत्यस्य च किं प्रमाणमिति चेद् 'उच्यते' अष्टयोजनोच्चश्चतुर्योजनविस्तीर्णो अष्टापदाद्रिस्तत्र एकयोजनदीर्घम् अर्धयोजनविस्तीर्णं त्रिगव्यूत्युन्नतं चतुर्द्वारं चैत्यं भरतचक्रिणा कारितं 'यदुक्तं' योगशास्त्रे श्रीहेमाचार्यैः,

तमष्टयोजनोच्छ्रायं चतुर्योजनविस्तृतं । आरोहत् सह सौदर्यैर्जह्नुर्मितपरिच्छदः ॥ १० ॥

ननु श्रीप्रथमचरमतीर्थकृतोः, छद्मस्थकाले सर्वोऽपि प्रमादकालः कियान् अभूत्? उच्यते, श्रीऋषभस्वामिनो वर्षसहस्रप्रमाणम्। छद्मस्थकालं यावद् उग्रं तपश्चरतः संकलितः प्रमादोऽहोरात्रमेव, तथा श्रीवीरप्रभोरपि 'द्वादशवर्षाणि साधिकानि तपश्चरतः प्रमादकालो अन्तर्मुहूर्त्तमेवेत्यादि, उत्तराध्ययनवृत्तौ कमलसंयम्यां द्वात्रिंशत्तमाध्ययने शास्त्रान्तरेऽपि उक्तं च ?

वीरुसहाण पमाओ अंतमुहुत्तं तहेव होरत्तं। उवसग्गा पासस्स य वीरस्स य नउण सेसाणं ॥ १ ॥ त्ति

इति प्रथमचरमतीर्थकृतोः प्रमादकालप्रमाणविचारः ॥ ४८ ॥

ननु 'शाश्वतजिनप्रतिमाः केनाऽऽसनेनोपविष्टाः सन्तीति'चेदुच्यते, पर्यङ्कासनेनेत्यवेहि (यदुक्तम्) योगशास्त्रवृत्तौ चतुर्थप्रकाशे ॥

स्याज्जङ्घयोरधोभागे पादोपरिकृते सति। पाणिद्वयं नाभ्यासन्नमुत्तानं दक्षिणोत्तरं ॥ २ ॥

यत्र तत्पर्यङ्को नाम शाश्वतप्रतिमानां श्रीमहावीरस्य च निर्वाणकाले आसनमित्यादि १ इति शाश्वतजिनप्रतिमाऽऽसनविचारः ॥ ४९ ॥

ननु चतुर्विंशतितीर्थकराः किमनशनम् अङ्गीकृत्य केनाऽऽसनेन चावस्थिता मुक्तिं गताः ? उच्यते, सर्वेऽपि तीर्थंकराः पादपोपगमनेनाऽनशनेन सिद्धाः सेत्स्यन्ति चागामिकालेऽपि, यदुक्तं प्रवचनसारोद्धारवृत्तौ पञ्चाशकविवरणे च ॥

१ पर्यङ्कोनाभिगोत्तानदक्षिणोत्तरपाणिक इति पाठान्तरम्। २ अन्यदाऽपि भगवतः पर्यङ्कासनं बभूव औपपातिकादौ पलियकसन्निसन्ने इत्युक्तत्वात्।

एवं तर्हि एकस्मिन् विमाने ते महर्द्धिका देवाः कया स्थित्या निवसन्तीति 'चेदुच्यते' देशकल्पे देवलोके ग्रामनगरादिकल्पेषु विमानेषु महर्द्धिकानाम् निवासभूमयो हि पाटककल्पा विज्ञेयाः, यद्येवं तर्हि भगवती तृतीयशतकप्रथमोद्देशके तिष्यकसाधोः[1] सम्बन्धे "सोहम्मे कप्पे सयंसि विमाणंसि त्ति" पाठः कथं संगच्छते 'उच्यते' एतत् सूत्रेण एकस्मिन्नेव निजस्वामिविमाने यस्य देवादेर्यावान् प्रदेशो विमानैकदेशभूतः स्वाधीनस्तस्य तावान् स प्रदेशो निजनिजविमानतया भण्यते, अत एव कालीदेव्या-श्चमरचञ्चाराजधान्येकदेशोऽपि निजभवनतया उक्तः, एवं चन्द्रप्रभासूर्यप्रभादिदेवीनामपि चन्द्रादिविमानैकदेश एव निज-विमानतया उक्तो ज्ञातव्यः, प्रवचनेऽपरिगृहीतदेवीनामेव पृथक् पृथक् विमानानामुक्तत्वाद् । इत्यलं विस्तरेण सर्वोऽपि अयमधिकारो जम्बूद्वीपप्रज्ञप्तिवृत्त्यादौ द्रष्टव्यः, इति सामानिकदेवादीनाम् न पृथग् विमानानीति विचारः ॥ ४६ ॥

ननु परमाऽधार्मिका देवा भव्या एवेति प्रघोषः सत्योऽसत्यो वा उच्यते, सत्य एवेति ज्ञायते, अभव्यकुलके, 'तायत्तिस-सुरत्तं परमाहम्मियत्त जुयलमणुअत्तं' इत्यादिवचनेन 'अभव्यानां परमाधार्मिकत्वादिभावस्य निषिद्धत्वात् । जन्मान्तरकृ-तदुष्कृतोक्तिपूर्वकं ते नारकान् कदर्थयन्ति, अभव्यानां च तन्न संगच्छते इत्यादि, युक्तिमप्यत्र वदन्ति वृद्धाः तथा च सति श्रीहीरविजयसूरिभिर्हीरप्रश्ने[2] यदुक्तं परमा धार्मिका भव्या एवेति प्रघोषोऽसत्य एवेत्यादि तच् चिन्त्यं, इति परमाऽधार्मिका देवा भव्या एवेति सप्तचत्वारिंशद् विचारः ॥ ४७ ॥

१ इन्द्रसामानिकत्वेनोत्पन्नस्य. २ तपागच्छिय एव.

त्यधिकयोजनशतोच्चा विज्ञेया:, अयं सर्वोऽपि अधिकारो जम्बूद्वीपप्रज्ञप्तिसूत्रवृत्त्योः प्रागुक्ताधिकारे एवास्तीति तत्रैव द्रष्टव्यो बहुत्वादत्र न लिख्यते । इति चतुःषष्टीन्द्राणां यानविमानकारकदेवनाम १ विमानप्रमाण २ महेन्द्रध्वजोच्चत्व ३ विचारः ॥ ४४ ॥

ननु इन्द्राणां ये पालकादयो विमानकारका देवास्ते स्वप्रदेशाधिष्ठितानि विमानानि रचयन्ति किं वा तद् रहितानि अचित्तपुद्गलरूपाण्येव 'उच्यते' पालकादयो देवा एव विमानरूपेण भवन्ति इत्यतो न अचित्तानीति संभाव्यते 'यदुक्तं' स्थानाङ्गवृत्तौ दशमस्थानके" पालक इत्यादीनि शक्रादीनां क्रमेणाऽवगन्तव्यानि इत्यादि, आभियोगिकाश्चैते देवा विमानीभवन्तीति, अत एव विमाननामान्यपि पालकादीन्येव बोध्यानि, इति यानविमानानां सचित्तादिविचारः ॥ ४५ ॥

ननु यथा लोकपालादीनां भिन्नानि विमानानि तथा इन्द्रसामानिकदेवानामपि महर्द्धिकत्वाद् भिन्नान्येव विमानानि भविष्यन्तीति चेन्नैवम् असंभवात्, असंभवश्च उपरितनदेवलोकेषु सहस्रारादिषु सामानिकदेवापेक्षया विमानानाम् अल्पसंख्याकत्वाद् बोध्यः, यतः सहस्रारे सर्वाण्यपि षट्सहस्रविमानानि, सामानिकास्तु त्रिंशत् सहस्राः, आनतप्राणतयोः समुदितयोश्चत्वारि शतानि विमानानि सामानिकास्तु विंशतिसहस्रा एव, आरणाच्युतयोस्त्रीणि शतानि विमानानि सामानिकास्तु दशसहस्राः, इत्यादि । अन्यच्च यदि सामानिकानां पृथक् विमानानि स्युस्तर्हि कस्यचिदभव्यस्यापि विमानाधिपतित्वप्रसङ्गः, श्रूयते चागमे अभव्यशक्रसामानिकः संगमको देवः, विमानाधिपतित्वं तु अभव्यस्याऽसंगतम् । अभव्यकुलके, चउदसरयणत्तं पि य पत्तं ण पुणो विमाणसामित्तं ॥ इत्यादि वचनेन तन्निषेधात् ततश्च स्वस्वेन्द्रविमानेष्वेव सामानिकदेवनिवासो बोध्यः ।

केवलिसमुद्घातं न कुर्वन्ति एव, येषां पुनरायुःस्वल्पं शेषकर्मत्रयं च प्रचुरं स्यात् ते कर्मचतुष्टयसमीकरणार्थ कुर्वन्तीत्यादिप्रज्ञा-
पनायां समुद्घातपदे । अत्र पुनर्गुणस्थानक्रमारोहे अयं विशेषः,
यः षण्मासाधिकाऽऽयुष्को लभते केवलोद्गमं करोत्यसौ समुद्घातं, शेषाः कुर्वन्ति वा न वा" उक्तं च ॥
छम्मासाऊ सेसे उप्पन्नं जेसिं केवलंणाणं । ते नियमा समुग्घाई य सेसा समुग्घाय भजयन्ति ?
छम्मासाउ त्ति षण्मासाधिकाऽऽयुरित्यर्थः, आवश्यकचूर्णौ तु नैवं तथा च तत् पाठः ये केवलिनः समुद्घातं कुर्वन्ति तत्प्र-
क्रियाविष्करणार्थमिदं प्रक्रियते । ये अन्तर्मुहूर्त्तमादिं कृत्वोत्कर्षेण आमासेभ्यः षड्भ्यः आयुषोऽवशिष्टेभ्यो अभ्यन्तरे आवि-
र्भूतकेवलज्ञानास्ते समुद्घाताद् बाह्याः ते समुद्घातं न कुर्वन्तीत्यर्थः, शेषाः समुद्घातं प्रति भाज्याः कस्मात् यस्मात् षण्मासाऽव-
शिष्टे आयुषि आविर्भूतकेवलज्ञानपर्यायेभ्यः केवलिभ्यः सकाशात् षड्भ्यो मासेभ्यो ये उपरिसमयोत्तरवृद्ध्याऽऽवशिष्टे आयुषि
शेषे आविर्भूतज्ञानाः केवलिनस्ते शेषाः समुद्घातप्रतिभाज्याः, केचित् समुद्घातं कुर्वन्ति केचिन्नेति, नमो सिद्धाणमिति पदव्या-
ख्याने अयं पाठः तत्त्वं तु बहुश्रुतगम्यम्, इति केवलिसमुद्घातं ये कुर्वन्ति तद्विचारः ॥ ५६ ॥
ननु केवलिसमुद्घातं कृत्वा भगवान् तत्कालमेव मुक्तिं याति किं वा अन्तर्मुहूर्त्ताऽनन्तरम्, उत षण्मासानन्तरमिति चेद् ?
उच्यते, अन्तर्मुहूर्त्तानन्तरमेव मुक्तिं याति प्रज्ञापनायां तथैवोक्तत्वात् तथा च लेशतस्तद्वृत्तिपाठः, सेणमित्यादि" सोऽधिकृतसमुद्घा-

१ उक्तमिति शेष

णिवेइयं ततो अमच्चं ते लवंति केवइयं पुणकालं आययणं अविसज्जिस्सइ ततो तेण अमच्चेण भणियं जाव इमाओसप्पिणित्ति इति मे केवलिजिणाणं अंतिए सुयंति ॥ अत्रार्थे सिद्धान्ताक्षराणि कानीति कश्चिद् वदति चेत् तं प्रति जम्बूद्वीपप्रज्ञप्त्यादौ सुषमसुषमारकादिवर्णके वापीदीर्घिकादिकृत्रिमपदार्थसद्भावो दर्शनीयः, हीरप्रश्नेऽपि एतत् प्रश्नस्य इत्थमेव समाधानं कृतमस्तीति ज्ञेयम्, इत्यष्टापदस्थचैत्यादिस्थितिविचारः ॥ ५४ ॥

ननु क्षीणमोहनामकद्वादशगुणस्थानस्य चरमसमये निःशेषेण ज्ञानावरणादिकर्मक्षयः, ततस्तस्मिन्नेव समये केवलज्ञानोत्पत्तिर्युक्ता, तथा चतुर्दशगुणस्थानस्य चरमसमये शेषसर्वकर्मक्षयस्ततश्च तस्मिन्नेव समये सिद्धत्वं युक्तं नतु अनन्तरसमये, शास्त्रे तु तयोरनन्तरसमये एव केवलोत्पत्तिसिद्धत्वे श्रूयेते ततः किमत्र श्रद्धेयं" उच्यते अत्र जिनप्रवचने निश्चयव्यवहारात्मके नयद्वये विद्येते तत्र निश्चयनयमतेन द्वादशचतुर्दशगुणस्थानयोरन्त्यसमये एव केवलोत्पत्तिसिद्धत्वे भवतो, व्यवहारनयमतेन तु तदनन्तरसमये इत्युभयमपि श्रद्धेयं तथाचोक्तं भाष्ये ॥

आवरणक्खयसमए निच्छइयनयस्स केवलुप्पत्ती । तत्तो णंतरसमए ववहारो केवलं भणइ १त्ति

इति द्वादशचतुर्दशगुणस्थानयोश्चरमसमयादौ केवलोत्पत्त्यादिविचारः ॥ ५५ ॥

ननु केवलिसमुद्घातं के कुर्वन्ति के च नेति 'चेदुच्यते' येषामायुःकर्मणां तुल्यं प्रमाणं वेदनीयादिकर्मक्षयं भवेत् ते तु

१ कर्मग्रन्थे उक्ता.

इत्युक्तमस्ति, इत्यष्टापदाद्रेः सोपानाष्टकं केन कृतमिति विचारः ॥ ५२ ॥

ननु अष्टापदोपरि सिंहनिषद्या प्रसादे चतुर्दिक्षु स्वस्ववर्णप्रमाणाद्युपेताश्चतुर्विंशतिजिनप्रतिमा भरतेन स्थापिताः सन्ति, तत्र पूर्वस्यां दिशि ऋषभाजितौ द्वावेव, दक्षिणस्यां संभवाद्याश्चत्वारः, पश्चिमायां सुपार्श्वाद्या अष्टौ, उत्तरस्यां धर्माद्या दश, एतत् संख्यया स्थापने को हेतुरिति चेद् उच्यते, आद्ययोर्देहमानस्य महत्त्वेन एकस्यां दिशि द्वयोरेव 'स्थापनं संगच्छते ततः परं क्रमेण देहमानस्य लघुलघुतरत्वेन चतुरादिसंख्यया स्थापनं युक्तियुक्तमेव, अतो देहमानस्य अल्पबहुत्वमेव अत्र हेतुः संभाव्यते पुनर्यद् बहुश्रुता वदन्ति तत् प्रमाणम्, इति अष्टापदचैत्ये द्विचतुरादिजिनस्थापनहेतुविचारः ॥ ५३ ॥

ननु श्रीभगवत्यामष्टमशतकनवमोद्देशके कृत्रिमवस्तुनः स्थितिः संख्यातं कालं यावदेव उक्ताऽस्ति । ततः कथम् अद्यतनं कालं यावदष्टापदाद्रौ भरतकारितचैत्यविम्बसद्भावो, अन्तराचतुर्थारकस्य असंख्यातकोटिकोटीवर्षप्रमाणत्वात् । तथा शत्रुञ्जयेऽपि भरतकारितान्येव प्रसादविम्बानि अद्यतनकालं यावत् कथं न स्थितानि, यतस्तत्र असंख्याता उद्धारा जाताः श्रूयन्ते इति चेद् १ उच्यते अष्टापदे स्थानस्य निरपायत्वात् देवादिसांनिध्यात् । जाव इमा ओसप्पिणित्ति वसुदेव हिण्डौ उक्तत्वाच्च चैत्यानामियत् कालं स्थितिर्युक्तैव शत्रुञ्जये तु स्थानस्य साऽपायत्वाद् भवितव्यतावशेन 'तथाविधदेवसांनिध्याभावाच्च भरतकारितचैत्यादीनाम् इयत्कालमवस्थानाऽभावः इति संभाव्यते, तत्त्वं तु तत्वविद् वेद्यमिति वसुदेवहिण्डिपाठस्तु, अयं ततो ते जण्हुपभइया कुमारा पुरिसे आणवेंति गवेसह अट्ठावयतुल्लं। पव्वयं ति ततो तेहिं तत्तुल्लो पव्वओ ण दिट्ठो त्ति

तत्रैकयोजनायाममर्द्धयोजनविस्तृतं । त्रिगव्यूत्युन्नतं चैत्यं चतुर्द्वारं विवेश सः ॥ ११ ॥

इत्यादि लोकप्रकाशे तु गव्यूतत्रितयोच्छ्रितमिति पाठोऽस्ति ततश्च योगशास्त्रेऽपि त्रयाणां गव्यूतानां समाहारस्त्रिगव्यूतीत्येवं समासेन स एवार्थो ज्ञेयः न तु गव्यूतिः क्रोशयुगमिति । इत्यष्टापदगिरेस्तद्गतचैत्यस्य च प्रमाणविचारः ॥ ५१ ॥

ननु अष्टापदाद्रेरष्टौ सोपानानि श्रूयन्ते तानि किं भरतचक्रिणैव कारितानि अन्येन वा केनचित् कृतानि, इति चेद् 'उच्यते' भरतकाले किल तानि नासन् किन्तु चतुर्थारके अर्द्धे व्यतीते सति अजितजिनः समुत्पन्नस्तद्वारके सगरचक्रिसुतेन जह्नुकुमारेण दण्डरत्नेन अष्टापदाद्रेरष्टौ सोपानानि कृतानि यदुक्तम् उत्तराध्ययनवृत्तौ,

इति श्रुत्वाऽथ दण्डेन पातयित्वाऽस्य भूभृतः । नितम्बदन्तशृङ्गाद्यम् अष्टसोपानताकृताः ॥ १ ॥

इत्यादि द्वितीयचक्र्यधिकारे लोकप्रकाशे तु भरताधिकारे

संतक्ष्य दण्डरत्नेन परितोऽष्टापदं गिरिम् । अष्टौ योजनमाना स्तन्मेखलाः स व्यरीरचत् ॥ २ ॥

इत्युक्तत्वाद् भरतेनैव तानि कारितानीति ज्ञायते, शत्रुञ्जयमाहात्म्ये च अष्टमसर्गे

अष्टाभिः पदिकाभिस्ते तमारुह्याऽतिहर्षतः । प्रासादान् जगदीशस्य त्रिःप्रदक्षिणयन् क्षणात् ॥ ५२ ॥

इत्येतावदेवोक्तमस्ति, सगरपुत्राधिकारे षष्ठसर्गे भरताधिकारे पुनः

योजनान्ते योजनान्ते दण्डरत्नेन चक्रिराट् । चकाराऽष्टौपदान्यस्मात् ख्यातः सोऽष्टापदो गिरिः ॥ ८२ ॥

इति लोकप्रकाशेऽपि बोध्यम्" इति देवानामुत्तरवैक्रियवस्त्रालङ्कारयुक्तमेवोत्पद्यते इति विचारः ६१
ननु गर्भजमनुष्यादीनामागमे षट् पर्याप्तय उक्ता देवानां भगवत्यादौ पञ्च, विहाए पज्जत्तीए पज्जत्तिभावं गच्छतीति वचनेन
पञ्चैव कथमिति चेद् 'उच्यते, भाषामनःपर्याप्त्योः समाप्तौ अन्तरस्य स्तोकत्वादेकत्वेन विवक्षणात् पञ्चैवोक्ता इति, यदुक्तं राजप्रश्नी-
यवृत्तौ भाषामनःपर्याप्त्योः समाप्तिकालान्तरस्य प्रायः शेषपर्याप्तिसमाप्तिकालान्तराऽपेक्षया स्तोकत्वादेकत्वेन
विवक्षणमिति" भगवतीवृत्तौ तु तृतीयशतकस्य प्रथमोद्देशके पञ्च विहाए पज्जत्तीएत्ति" पर्याप्तिराहारशरीरादीनामभिनिर्वृत्तिः
सा च अन्यत्र षोढोक्ता इह तु पञ्चधा भाषामनःपर्याप्त्योर्बहुश्रुताभिमतेन केनापि कारणेनैकत्वविवक्षणादित्युक्तमस्ति" प्रवचनसारो-
द्धारसूत्रेऽपि २३२ द्वात्रिंशदधिकद्विशततमे द्वारे, समगंपि हुंति नवरं पञ्चमछट्ठीउ अमराणमिति वचनात् समकालं पर्या-
प्तिद्वयम् उक्तमस्ति इति देवानां पञ्चपर्याप्तिविचारः ॥ ६२ ॥
ननु शास्त्रेषु उत्तरस्यां दिशि मानसाऽऽख्यं सरः श्रूयते तज् जम्बूद्वीपेऽस्ति किंवा अन्यत्र कस्मिंश्चिद् द्वीपे किं पुनस्तत् प्रमाण-
मिति चेद् १ उच्यते, उदीच्यां हि दिशि संख्येययोजनेषु द्वीपेषु मध्ये कस्मिंश्चिद् द्वीपे आयामविष्कम्भाभ्यां संख्येययोजनकोटाकोटी-
प्रमाणं मानसं नाम सरः समस्तीत्यादिप्रज्ञापनावृत्तौ तृतीयेऽल्पबहुत्वाऽऽख्ये पदे, इति मानससरसःस्थानप्रमाणयोर्विचारः ॥६३॥
ननु हंसः क्षीरमुदकमिश्रितमपि कथं विभक्तीकरोति येन क्षीरमेव केवलम् पिबति नतु उदकमिति १ उच्यते तज् जिह्वाया
अमलत्वेन क्षीरस्य कूर्चिकीभूय पृथक् भवनात् उक्तं च ॥

साधूनां किम्वा देवेन्द्रचक्रवर्त्यादीनामिति चेद् 'उच्यते' गणधरेभ्योऽनन्तगुणहीनं रूपमाहारकलब्धिमत्साधुकृताऽऽहारकदेहानां, तेभ्योऽनन्तगुणहीनमनुत्तरसुराणां, तेभ्यो ग्रैवेयकदेवानां। तेभ्योऽच्युतादीनां क्रमेण प्रत्येकमनन्तगुणहीनं ज्ञेयम्। आवश्यकबृहद्वृत्तौ तथैवोक्तत्वात्, तथा च संक्षेपतस्तत् पाठः, श्रीतीर्थंकरगणधराहारकशरीराऽनुत्तरग्रैवेयकाऽच्युतारणप्राणतानतसहस्रारशुक्रलान्तकब्रह्मलोकमाहेन्द्रसनत्कुमारेशानसौधर्मभवनवासिज्योतिष्कव्यन्तरचक्रवर्त्तिवासुदेवबलदेवमहामाण्डलिकानां रूपेषु क्रमेण प्रत्येकमनन्तगुणहानिः द्रष्टव्या, शेषा राजानो जनपदलोकाश्च षट्स्थानगता भवन्तीत्यादि, इति तीर्थंकरादीनां रूपाधिक्यादिविचारः ॥ ६० ॥

ननु देवानां भवधारणीयशरीरम् उत्पत्तिसमये वस्त्रालङ्कारवर्जितं स्वाभाविकाऽद्भुतरूपयुक्तं भवेत्, तत स्तैस्तस्मिन् यथाऽवसरं वस्त्रालङ्कारा धार्यन्ते, उत्तरवैक्रियमपि शरीरं तथैव भवेत् किंवा वस्त्रादियुक्तमेव तद् विरच्यते इति चेद् 'उच्यते' उत्तरवैक्रियं हि वस्त्रालङ्कारयुक्तमेव विरच्यते। नतु तत्र पश्चाद् वस्त्रादिकं धार्यते, यदुक्तं जीवाभिगमसूत्रे" सोहम्मीसाणदेवा केरिसया-विभूसाए पण्णत्ता–गोयमा दुविहा पण्णत्ता तं वेउव्वियशरीरा य अवेउव्वियसरीरा य तत्थणं जे ते वेउव्वियसरीरा ते हारविराइयवत्था जाव दसदिसाओ उज्जोएमाणा इत्यादि" तत्थणं जे ते अवेउव्वियसरीरा तेणं आभरणवसणरहिया पगतित्थाविभूसाए पण्णत्ता। इति

विरच्यन्ते पुनर्ये तु सुरैरुत्तरवैक्रियाः ते स्युः समसमुत्पन्नवस्त्रालङ्कारभासुराः

येषां सम्यक्त्वपरिभ्रष्टानाम् अनन्तः कालोऽगमत् तेषामष्टशतं १०८ संख्यातकालपतितानाम्, असंख्यातकालपतितानाञ्च दशकं दशकं अप्रतिपतितसम्यक्त्वानाम् चतुष्टयमेकसमयेन उत्कर्षतः सिध्यति उक्तं च ।

**"जेसि मणंतो कालो पडिवाओ तेसिं होइ अट्ठसयं" अप्पडिवडिए चउरो दसगं दसगं च सेसाणं ॥ १ ॥**

इति नन्दीवृत्तौ, इति अप्रतिपतितसम्यक्त्वादयः कियन्तः सिध्यन्तीत्यादिविचारः ॥ ५८ ॥

**ननु** सर्वार्थसिद्धविमानोपरि द्वादशयोजनातिक्रमे सिद्धिशिलाऽस्ति सा च मध्यभागे अष्टौ योजनानि यावदष्टयोजनवाहल्या ततः परं कियत्या हान्या हीयमाना प्रान्तेषु अतितन्वी जाता अस्ति 'उच्यते' श्रीप्रज्ञापनासूत्रवृत्त्योस्तु तदनन्तरं सर्वासु दिक्षु विदिक्षु च मात्रया स्तोकया स्तोकया प्रदेशहान्या परिहीयमाणा सर्वेषु चरमान्तेषु मक्षिका पत्रतोऽप्यतितन्वी अङ्गुलाऽसंख्येयभागं वाहल्येन प्रज्ञप्ता, इति सामान्येनैवोक्तमस्ति नतु विशेषतः । उत्तराध्ययनस्य कमलसंयमीवृत्तौ पुनरेवमुक्तमस्ति" सिद्धिशिलामध्यभागे अष्टयोजनवाहल्या चरमान्तेषु तनुतरा क्रमेण हीयमानत्वात् हानिश्चात्र विशेषाऽनभिधानेन प्रतियोजनमङ्गुलपृथक्त्वं द्रष्टव्येति, एतच्चावश्यकनिर्युक्त्यभिप्रायेण उक्तम् तथा च तत्पाठः

**गंतूण जोयणं जोयणं तु परिहाइ अंगुलपहुत्तं तीसेव य पेरंता मच्छीपत्ताउ तणुयअरा ५८**

इति सिद्धिशिलावाहल्ये कियत् प्रदेशहानिविचारः ५९

**ननु** जगत्त्रयेऽपि सर्वोत्कृष्टं रूपं तीर्थकराणां तेभ्योऽनन्तगुणहीनं तद्गणधराणां तेभ्योऽनन्तगुणहीनं रूपं केषांचित्

तगतो णमिति वाक्यालङ्कारे ततः समुद्घातात् प्रतिनिवर्त्तते निवर्त्य च ततः प्रतिनिवर्त्तनात् पश्चाद् अनन्तरं मनोयोगमपि वाग्योगमपि काययोगमपि युनक्ति व्यापारयति यतः स भगवान् भवधारणीयकर्मसु नामगोत्रवेदनीयेषु, अचिन्त्यमाहात्म्यसमुद्घातवशतः प्रभूतेष्वायुषा सह समीकृतेषुः, अपि अन्तर्मुहूर्त्तभाविपरमपदः, तस्मिन् काले यद्यनुत्तरोपपातिकादिनादेवेन मनसा पृच्छ्यते, तर्हि व्याकरणाय मनःपुद्गलान् गृहीत्वा मनोयोगं युनक्ति, तमपि सत्यम्, असत्यामृपारूपं वा मनुष्यादिना पृष्टस्सन् नपृष्टो वा कार्यवशतो वाग्पुद्गलान् गृहीत्वा वाग्योगं तमपि प्राग्वद् आगमनादौ च काययोगम्" तथाहि भगवान् कार्यवशतः कुतश्चित् स्थानात् विवक्षिते स्थाने आगच्छेत् एवं गच्छेत् तिष्ठेत् निपीदेत् वा तथाविधश्रमापगमाय त्वग्वर्त्तनं वा कुर्यात् इत्यादि, यदि वा प्रातिहारिकं पीठफलकशय्यासंस्तारकं प्रत्यर्प्पयेत्, यस्मादानीतं तस्मै समर्प्पयेद्, इह भगवता आर्यस्यामेन प्रातिहारिकपीठफलकादीनां प्रत्यर्प्पणमेवोक्तं, ततोऽवसीयते नियमादन्तर्मुहूर्त्ताऽवशेषाऽऽयुष्क एव आवर्जीकरणादिकम् आरभते न ततो विशेषाऽऽयुष्कोऽन्यथा ग्रहणस्यापि संभवात्, तदपि उपादीयेत" एतेन यदाहुरेके जघन्यतोऽन्तर्मुहूर्त्ते शेषे समुद्घातमारभते उत्कर्षतः षट्सु मासेषु शेषेष्विति तदपास्तम् द्रष्टव्यमित्यादि" समुद्घातान् निवृत्तश्च अन्तर्मुहूर्त्तेन योगनिरोधं करोतीति, औपपातिकोपाङ्गवृत्तौ अपि ज्ञेयम् इति केवलिसमुद्घाताऽनन्तरम्, अन्तर्मुहूर्त्तेन मुक्तिरितिविचारः ॥ १ ॥

ननु अस्मिन् संसारे केचिद् जीवाः सम्यक्त्वपरिभ्रष्टाः पुनरपि संख्यातेनाऽसंख्यातेनाऽनन्तेन वा कालेन सम्यक्त्वं प्राप्य सिध्यन्ति केचित् तु अप्रतिपतितसम्यक्त्वा एव सिध्यन्ति, ते सर्वेऽपि उत्कर्षत एकस्मिन् समये कियन्तः सिध्यन्ति इति? चेदुच्यते

नन्नु अभव्या अपि केचिद् यथाप्रवृत्तिकरणेन ग्रन्थिदेशे स्थिता द्रव्यलिङ्गं प्राप्य श्रुताऽभ्यासं चेत् कुर्वन्ति तर्हि कियत् श्रुतं लभन्ते, तथा क्रियाबलात् स्वर्गं यान्ति चेद् कियत् दूरं व्रजन्ति १ उच्यते, अभव्या उत्कृष्टत एकादशाङ्गानि श्रुतं लभन्ते, यदुक्तं विशेषावश्यकसूत्रवृत्तौ ॥

तित्थंकराइपूअं दट्ठुं अण्णेण वा वि कज्जेण। सुअसामाइयलाभो होइ अभव्वस्स गंठिम्मि ॥ १५ ॥

अर्हदादिविभूतिम् अतिशयवतीं दृष्ट्वा धर्माद् एवं विधः सत्कारो देवत्वराज्यादयो वा प्राप्यन्ते इत्येवम् उत्पन्नबुद्धेरभव्यस्याऽपि ग्रन्थिस्थानं प्राप्तस्य तद्विभूतिनिमित्तमितिशेषः देवत्वनरेन्द्रत्वसौभाग्यबलादिलक्षणेनाऽन्येन वा प्रयोजनेन सर्वथा निर्वाणश्रद्धानरहितस्याऽभव्यस्याऽपि कष्टानुष्ठानं किंचिदङ्गीकुर्वतो ज्ञानरूपस्य श्रुतसामायिकमात्रस्य लाभो भवेत्, तस्याऽपि एकादशाङ्गपाठानुज्ञानादिति, तथा अभव्या उत्कर्षत उपरिमग्रैवेयकाणि यावद् गच्छन्ति, यदुक्तं भगवतीवृत्तौ प्रथमशते द्वितीयोद्देशके "मिथ्यादृष्टय एव अभव्या भव्या वा असंयतभव्यद्रव्यदेवाः श्रमणगुणधारिणो निखिलसमाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणो गृह्यन्ते, तेहि अखिलकेवलक्रियाप्रभावत एव उपरिमग्रैवेयकेषु उत्पद्यन्ते, इति असंयताश्च ते सत्यपि अनुष्ठाने चारित्रपरिणामशून्यत्वादित्यादि" एवं प्रवचनसारोद्धारसूत्रवृत्त्योरपि नवत्यधिकशततम १९० द्वारे बोध्यम्, यत्तु कचिन् नवपूर्वान्तं श्रुतम् अभव्यानाम् अङ्गारमर्दकाचार्यादीनाम् श्रूयते, तत् सूत्रपाठमात्रमवसीयते तेषां पूर्वलब्धेरभावात्, यद् वा नवपूर्वाणि पूर्वधरलब्धिं विनाऽपि भवन्ति, इत्यभव्यानां कियत् श्रुतलाभः कियद् दूरं चोर्ध्वगतिरिति विचारः ॥ ७० ॥

ननु देवा नारकाश्च यान् पुद्गलान् आहारतया गृह्णन्ति तान् तथा कार्मणशरीरपुद्गलान् किम् अवधिज्ञानादिना जानन्ति पश्यन्ति उत नेति चेद् १ उच्यते, नारकास्तु न जानन्ति न पश्यन्ति, देवास्तु केचिद् जानन्ति केचिन्नेति, श्रीसमवायाङ्गसूत्रवृत्त्यादौ तथैव उक्तत्वात् तथा च संक्षेपतस्तत् पाठः "पोग्गलानेव जाणंति त्ति," अयमर्थः, नारका यान् पुद्गलान् आहारयन्ति तानवधिनाऽपि न जानन्ति अविषयत्वात् तदवधेस्तेषां, न पश्यन्ति चक्षुषाऽपि लोमाहारत्वात् तेषां, एवम् असुरा व्यन्तरज्योतिष्काश्च, वैमानिकास्तु ये सम्यग्दृष्टयस्ते जानन्ति विशिष्टाऽवधित्वात् पश्यन्ति चक्षुषोऽपि विशिष्टत्वात्, मिथ्यादृष्टयस्तु न जानन्ति न पश्यन्ति प्रत्यक्षपरोक्षज्ञानयोस्तेषाम् अस्पष्टत्वादित्यादिः, संग्रहिणीवृत्तौ तु देवानां मनसा परिकल्पिताः शुभाः पुद्गलाः सर्वेणैव कायेन आहारतया परिणमन्ति, नारकाणां तु अशुभाः तांश्च आहार्यमाणपुद्गलान् विशुद्धाऽवधिचक्षुर्भावाद् अनुत्तरसुरा एव जानन्ति पश्यन्ति, न पुनर्नारकग्रैवेयकान्तदेवा इत्युक्तमस्ति, प्रज्ञापनावृत्तावपि एष एवाऽभिप्रायोऽस्ति तत्त्वं तु ज्ञानिगम्यं, तथा कार्मणशरीरपुद्गलानपि अनुत्तरसुरा एव जानन्ति पश्यन्ति, नतु ग्रैवेयकान्तदेवाः तदवधेरगोचरत्वात्[1], यदुक्तं प्रज्ञापनावृत्तौ, इन्द्रियपदे प्रथमोद्देशके यदपि आरातीयेष्वपि कल्पेषु ग्रैवेयकेषु च सम्यग् दृष्टयो देवाः सन्ति तथाऽपि तेषामवधिर्न कार्मणशरीरपुद्गलविषय इत्यादि, इति देवनारकाणामाहारादिपुद्गलज्ञानाज्ञानविचारः ॥ ६९ ॥

---

१ इन्द्रियपदे ।

ननु चक्रवर्त्तिनां यथा षोडशसहस्रव्यन्तरदेवाः सेवां कुर्वन्ति तथाऽर्धचक्रिणां वासुदेवानाम् अष्टसहस्रदेवाः सेवां कुर्वन्ति नवा, उच्यते, कुर्वन्ति मनुष्यान् अपि चक्रवर्त्तिवासुदेवप्रभृतीन् भृत्यवद् उपचरन्ति केचिद् व्यन्तराः,, इति प्रज्ञापनावृत्तौ प्रथमपदे उक्तत्वात् "अट्ठय देवसहस्सा अभिओगा सव्वकज्जेसु" इत्यादि तीर्थोद्गारप्रकीर्णके उक्तत्वात् चेति, इति वासुदेवानाम् अष्टसहस्रदेवाः सेवका इतिविचारः ॥ ६७ ॥

ननु चतुर्दशपूर्वधरः साधुर्देवत्वं प्राप्तः सन् किं तत् पूर्वाधीतं श्रुतं सर्वं सरति उत तद्देशमिति चेद् उच्यते, प्रायेण तु तद्देशमेव सरति नतु सर्वं, यदुक्तं बृहत्कल्पवृत्तौ पीठिकायां ॥

चउदसपुव्वी मणुओ देवत्ते तं ण संभरइ सव्वं। देसंमि होइ भयणा सट्ठाणभवे वि भयणा उ ॥ १ ॥

व्याख्या, चतुर्दशपूर्वी मनुजो देवत्वे प्राप्ते सति तत् श्रुतं सर्वं न संस्मरति विषयप्रमादतस्तथाविधोपयोगाऽभावात्, देशे भवति भजना विकल्पना, सा तु एवं, कश्चिद् देशं सरति, कश्चिद् देशस्याऽपि देशं, कश्चित् पुनरेकादशस्वपि अङ्गेषु सर्वं सरति, कश्चित् तेषामपि देशमिति, स्वस्थानभवे मनुष्यभवेऽपि तिष्ठतो भजना, तत्र श्रुतज्ञाननाशकारणानि अमूनि "मिच्छभवंतरकेवलगेलन्नपमायमाइणा नासो त्ति" एवं विशेषाऽऽवश्यकेऽपि बोध्यम्, षष्ठाङ्गचतुर्दशाध्ययने तु तेतलिमन्त्रिणः पूर्वाधीतचतुर्दशपूर्वस्मरणमुक्तम् अस्तीति ज्ञेयम्, इति देवत्वप्राप्तस्य साधोः पूर्वाधीतश्रुतस्मरणादिविचारः ॥ ६८ ॥

अंबत्तणेण जीहाए कूचिया होइ खीरमुदयम्मि। हंसो मुत्तूण जलं आवियइ पयं तह सुसीसो ॥ १ ॥
इति नन्दीवृत्तौ, इति हंसस्य क्षीरनीरपृथक्करणहेतुविचारः ॥ ६४ ॥

ननु असुरकुमारदेवाः कदाचिद् वैमानिकानां रत्नानि चोरयित्वा एकान्तं व्रजन्ति तदा ते वैमानिका देवाः प्रहारैस्तान् पीडयन्ति, तदा वा ऽन्यदा वा तेषामसातवेदना कियत् कालं भवति, उच्यते, जघन्यतोऽन्तर्मुहूर्त्तम्, उत्कर्षतः पण्मासान् यावद् भवति ॥ यदुक्तं भगवतीवृत्तौ तृतीयशतके द्वितीयोद्देशके, एषां रत्नादातृणामसुराणां कायं देहं प्रव्यथन्ते प्रहारैर्मश्नन्ति वैमानिका देवाः तेषां च प्रव्यथितानां वेदना भवति जघन्ये नाऽन्तर्मुहूर्त्तमुत्कृष्टतः पण्मासान् यावदिति,, योगशास्त्रवृत्तौ तु देवाश्च सद्वेदना एव प्रायेण भवन्ति, यदि च असद् वेदना भवन्ति ततोऽन्तर्मुहूर्त्तमेव न परत इत्युक्तमस्ति, इति देवानां यावत् कालमसातवेदना भवति तद्विचारः ॥ ६५ ॥

ननु तिर्यग् जृम्भका देवा क्व वसन्ति ? उच्यते, तिर्यग्जृम्भका व्यन्तरविशेषाः दीर्घवैताढ्येषु काञ्चनगिरिषु चित्रविचित्र-पर्वतयोः यमकपर्वतयोश्च वसन्ति, श्रीभगवत्यां चतुर्दशशते अष्टमोद्देशके तथैव उक्तत्वात् अन्यत्रापि उक्तञ्च ॥
कञ्चणगिरिकूडेसु चित्तविचित्ते य जमगसमगे य। एएसु ठाणेसु वसंति तिरिअजंभगा देवा ॥ १ ॥
इति तिर्यग् जृम्भकदेवानां निवासस्थानविचारः ॥ ६६ ॥

समणे णिग्गंथे आमंतेत्ता एवं वयासि जावतिएणं अज्जो गोसालेणं मंखलिपुत्तेणं ममवहाए सरीरगंसि तेयं णिसट्ठे सेणं अलाहिपज्जंते सोलसण्हं जणवयाणं तं० अंगाणं वंगाणं कलिंगाणं मगहाणं मलयाणं मालवगाणं अच्छाणं वच्छाणं कच्छाणं पाढाणं लाढाणं वज्जीणं मोलीणं कोसलगाणं आवाहाणं संभुत्तराणं घाताए वहाए उच्छादणयाए भासीकरणयाए त्ति" न हि एतत् सामान्यतः सामर्थ्यमुक्तम् किन्तु विशेषविवक्षयेति ज्ञायते जावतिएणमित्यादि पदोपादानात्, इति तेजोलेश्या सामर्थ्यविचारः ॥ ७३ ॥

ननु—सव्वस्स उण्हसिद्धं रसाइ आहारपागजणगं च । तेयगलद्धिनिमित्तं च तेयगं होइ नायव्वं ॥

इति जीवाभिगमवृत्तावुक्तत्वात् तेजोलेश्या तु तैजसशरीरात् निर्गच्छतीति ज्ञातं, परं शीतलेश्या कुतो निर्गच्छति चेद् ? उच्यते, तैजसशरीरादेव साऽपि प्रभवति, यदुक्तं तत्त्वार्थवृत्तौ, यदा उत्तरगुणप्रत्यया लब्धिरुत्पन्ना भवति तदा परं प्रतिदाहाय विसृजति रोषविषाध्मातो गोशालादिवत् प्रसन्नस्तु शीततेजसा अनुगृह्णातीति, लोकप्रकाशे ऽपि उक्तं च

अस्मादेव भवत्येवं शीतलेश्याविनिर्गतिः। स्यातां च रोषतोषाभ्यां निग्रहानुग्रहावितः ॥ १ ॥

इत्यादि, इति शीतलेश्या कुतो निर्गच्छतीति विचारः ॥ ७४ ॥

ननु आहारकादिलब्धिभृतो विद्याधरादयश्च स्वलब्ध्यादिना उत्कृष्टतः कियत् दूरं तिर्यग् गच्छन्तीति चेद् ? उच्यते, आहारकशरीरिणः उत्कृष्टतो महाविदेहान् यावद् गच्छन्ति, विद्याचारणमुनयो विद्याधराश्च नन्दीश्वरद्वीपं यावद् गच्छन्ति-

नन्नु अणिमाद्यष्टसिद्धयः कस्यां लब्धौ अन्तर्भवन्ति ? उच्यते, वैक्रियलब्धावासाम् अन्तर्भावो ज्ञायते, यत उक्तं योगशास्त्र-वृत्तौ श्रीहेमचन्द्रसूरिभिः "वैक्रिया लब्धयोऽनेकधा"

अणुत्वमहत्वलघुत्वगुरुत्वप्राप्तिप्राकाम्येशित्ववशित्वाऽप्रतिघातित्वान्तर्धानत्वकामरूपित्वादिभेदात्,

अणुत्वमनुशरीरविकरणं येन विसच्छिद्रमपि प्रविश्य तत्र चक्रवर्त्तिभोगानपि भुङ्क्ते १ महत्त्वं मेरोरपि महत्तरशरीरकरण-सामर्थ्यं २ लघुत्वं वायोरपि लघुतरशरीरता ३ गुरुत्वं वज्रादपि गुरुतरशरीरतया इन्द्रादिभिरपि प्रकृष्टबलैर्दुःसहता ४ प्राप्तिर्भूमिष्ठस्य अङ्गुल्यग्रेण मेरुपर्वताग्रप्रभाकरादिस्पर्शसामर्थ्यम् ५ प्राकाम्यम् अप्सु भूमौ इवाऽप्रविशतो गमनशक्तिः तथा अप्सु इव भूमावुन्मज्जननिमज्जने ६ ईशित्वं त्रैलोक्यस्य प्रभुता तीर्थकरत्रिदशेश्वर ऋद्धिविकरणं ७ वशित्वं सर्वजीववशी-करणलब्धिः ८ अप्रतिघातित्वम् अद्रिमध्येऽपि निःसङ्गगमनं ९ अन्तर्धानमदृश्यरूपता १० कामरूपित्वं युगपदेव नानाऽऽ-काररूपविकरणशक्तिः ११ इत्येवमादयो महर्द्धय इति, एवं प्रवचनसारोद्धारवृत्तावपि बोध्यम् । नवरं तत्र एता लब्धयः "एमाईत्ति" आदिशब्देन संगृहीताः सन्ति इत्यणिमाद्यष्टसिद्धिविचारः ॥ ७२ ॥

नन्नु तेजोलेश्यायाः कियत् क्षेत्राश्रितवस्तुदहनसामर्थ्यम् ? उच्यते, श्रीभगवतीवृत्तौ श्रीगौतमवर्णके अनेकयोजनप्रमाणक्षे-त्राऽऽश्रितवस्तुदहनसामर्थ्यमुक्तमस्ति, एवं प्रवचनसारोद्धारवृत्तावपि बोध्यम् । यत् पुनः क्वचित् तेजोलेश्यायाः षोडशदेशदह-नसामर्थ्यम्, उच्यते, तदपि श्रीभगवतीसूत्रे पञ्चदशशतकाऽनुसारतः, तत्पाठस्तु एवम्,, अज्जोत्ति समणे भगवं महावीरे

भवसिद्धियपुरिसाणं एयाओ हुंति भणियलद्धीओ। भवसिद्धियमहिलाण वि जत्तिय जायंति तं वोच्छं ॥१॥
अरिहंतचक्किकेसव बलसंभिन्ने य चारणा पुव्वा। गणहर पुलाय आहारगं च न हु भवियमहिलाणं ॥ २ ॥
अभवियपुरिसाणं पुण दसपुव्विल्लाउ केवलित्तं च। उज्जुमई विउलमई तेरस एयाउ नहु हुंति ॥ ३ ॥
अभवियमहिलाणं पि हु एयाउ ण हुंति भणियलद्धीओ। महुक्खीरा सव्वलद्धी वि नेय सेसा उ अविरुद्धा ४

इति यस्तु प्रज्ञापनावृत्तौ स्त्रीणां मुक्तिस्थापनाधिकारे उपन्यस्तया
वादविकुर्वणत्वादि लब्धिविरहे श्रुते कनीयसि च जिनकल्पमनःपर्यवविरहेऽपि न सिद्धिविरहोऽस्ति ?

इति ग्रन्थान्तरीयाऽऽर्यया स्त्रीणां वैक्रियलब्ध्याद्यभाव उक्तः स तु परपक्षीयमतम् अनूद्यैव अभिहितो ज्ञायते, अन्यथा प्रज्ञापनावृत्तावेवाल्पबहुत्वपदे मानुषीणाम् वैक्रियसमुद्घातकथनम् असङ्गतं स्यादिति, अन्यथा वा बहुश्रुतैः परिभाव्यम्

ननु अष्टाविंशतिव्यतिरिक्ता अन्या अपि काश्चिल्लब्धयः सन्ति न वा ? उच्यते, सन्त्येव प्रवचनसारोद्धारसूत्रवृत्त्योस्तथैवोक्तत्वात् तथा च तत्पाठः "एमाई हुंति लद्धीओ त्ति," एवमेता अष्टाविंशतिसंख्याका आदिशब्दादन्याश्च जीवानां शुभशुभतर शुभतमपरिणामवशाद् । असाधारणतपःप्रभावाच्च नानाविधा लब्धय ऋद्धिविशेषा भवन्तीति, इति भव्याऽभव्यपुरुषस्त्रीणां यावन्त्यो लब्धयस्तद्विचारः ॥ ७१ ॥

ननु आमर्शौषधि–विप्रुडौषधि–खेलौषधि–जल्लौषधि–सर्वौषधि–संभिन्नश्रोतो–ऽवध्यृजुमति–विपुलमति–चारिणांऽऽशीविष–केवल–गणधर–पूर्वधर–तीर्थंकर–चक्रवर्त्ति–वासुदेव–बलदेव–क्षीरमधुसर्पिरास्रव–कोष्टकबुद्धि–पादानुसारि–बीजबुद्धि–तेजोलेश्याऽऽहारक–शीतलेश्या–वैक्रियशरीराऽक्षीणमहानसी–पुलाकलब्धि–संज्ञिका अष्टाविंशतिर्लब्धयो भव्यपुरुषाणां भवन्ति, परं भव्यमानुषीणाम् अभव्यपुरुषाणामभव्यस्त्रीणां च कति लब्धयः स्युरिति चेद् ? उच्यते, आसां मध्याद्, अर्हच्चक्रि वासुदेव बलदेव–संभिन्नश्रोतश्चारणपूर्वधर–गणधर–पुलाकाऽऽहारक–लक्षणा दशलब्धयो भव्यस्त्रीणां न भवन्ति, शेषा अष्टादश भवन्ति, यच्च मल्लिस्वामिनः स्त्रीत्वेऽपि तीर्थकरत्वम् अभूत्, तदाश्चर्यभूतत्वान्न गणनीयं, तथा केवलित्वर्जुमति विपुलमति लक्षणलब्धित्रययुताः पूर्वोक्ता दशलब्धयोऽर्थात् त्रयोदशलब्धयोऽभव्यपुरुषाणां न भवन्ति, शेषाः पञ्चदश भवन्ति, तथा अभव्यस्त्रीणामपि एताः पूर्वोक्तास्त्रयोदश लब्धयो न भवन्ति, चतुर्दशी मधुक्षीरास्रवलब्धिरपि तासां न भवति, शेषाः चतुर्दशलब्धयो भवन्ति अपीति, यदुक्तं प्रवचनसारोद्धारसूत्रे "आमो सहीत्यादिगाथा चतुष्टयं तथा"

---

[४] दश चतुर्दशपूर्वविदः इति आवश्यकवृत्तौ । १ आमोसही । १ विप्पोसही २ खेलोसही ३ जल्लोसही चेव ४ सव्वोसही ५ संभिन्ने ६ ओही ७ रिउ ८ विउलमइलद्धी ९ ॥ ६ ॥ चारण १० आसीविस ११ केवलिय १२ गणहारिणो य १३ पुव्वधरा १४ अरहंत १५ चक्कवट्टी १६ बलदेवा १७ वासुदेवा १८ य ॥ ७ ॥ खीरमहुसप्पि आसव १९ कोट्ठयबुद्धी २० पयाणुसारी २१ य तह बीयबुद्धी २२ तेयग २३ आहारग २४ सीयलेसा २५ य ॥ ८ ॥ वेउव्विदेहलद्धी २६ अक्खीणमहाणसी २७ पुलाया २८ य परिणामतववसेणं एमाइ हुंति लद्धीओ ॥ ९ ॥

जङ्घाचारणास्तु रुचकद्वीपं यावत् गच्छान्ति, यदुक्तं, संग्रहिणीवृत्तौ औदारिकस्य तिर्यगुत्कृष्टो विषयो विद्याधरान् आश्रित्या, ऽऽनन्दीश्वरात्, जङ्घाचारणात् प्रत्यारुचकपर्वतात् ऊर्ध्वम् उभयान् प्रत्यापण्डुकवनात्। वैक्रियस्याऽसंख्येया द्वीपसमुद्राः, आहारकस्य महाविदेहः, तैजसकार्मणयोः सर्वलोकः, इत्यादि, इति विद्याधरादीनां तिर्यगूर्ध्वगमनप्रमाणविचारः ॥ ७५ ॥

श्रीजिनलाभसूर्यादि सद्गुरूणामनुग्रहात्। क्षमाकल्याणगणिना निर्मिते स्मृतिहेतवे ॥ १ ॥

प्रश्नोत्तरसार्धशते पूर्वार्धं परिपूर्णताम्। गतं स्यादत्र यः कश्चिद् दोषः शोध्यः स कोविदैः ॥ २ ॥

युग्मम् ॥



तिरिअं गई पवत्तइ त्ति सूत्रं चारणाणंति, जङ्घाचारणानां विद्याचारणानां, तिरिअंति, तिर्यग्रुचिकादिद्वीपगमनाय इति तद्वृत्तिः, इति जङ्घाचारणादीनां लवणशिखालङ्घनविचारः ॥ ७७ ॥

ननु साधूनां गृहस्थपार्श्वात् छिन्नमेव वस्त्रं याचित्वा धारयितुं युक्तं, परं यदि छिन्नं वस्त्रं न प्राप्यते तर्हि स्वयं छिन्द्यान् नवा ? उच्यते, यदि प्रमाणोपेतं छिन्नं वस्त्रं न लभ्यते, तर्हि स्वयमपि छिन्द्यात् "वृहत्कल्पवृत्तौ द्वितीयखण्डे साक्षेपपरिहारं तथैव उक्तत्वात्, तथा च संक्षेपतस्तत्पाठः, "नो कप्पइ निग्गंथाण वा निग्गंथीण वा अभिन्नाइं वत्थाइं धारित्तए २

इति सूत्रं," नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनामभिन्नानि अच्छिन्नानि वस्त्राणि धारयितुं वा परिहर्तुं वेत्यादि । तस्मात् भिन्नस्यैव वस्त्रस्य ग्रहणं कर्त्तव्यम्, अथ भिन्नं न प्राप्यते, ततः स्वयमपि भिन्द्याद्, यावता प्रमाणेनातिरिक्तं तावच्छित्त्वा प्रमाणयुक्तं कुर्यादिति भावः, अत्र केचिन् नोदकाः प्रेरयन्ति, ननु वस्त्रे छिद्यमाने शब्दः समुत्पद्यते, सूक्ष्मपक्ष्मावयवा उड्डीयन्ते, एते च द्वये ऽपि निर्गता लोकान्तं यावत् प्राप्नुवन्ति, अथवा एतत् प्रेरिताश्चालिताः सन्तो ऽपरे पुद्गला लोकान्तं व्रजन्ति, तथा तस्य देहस्य चलनात् विनिर्गता वातादयः प्रसरन्तः सकलमपि लोकं व्याप्नुवन्ति, ततश्च सूक्ष्मजीवविराधना स्यात्, तस्मादिमम् आरम्भं सावद्यं विज्ञाय यथा लब्धं वस्त्रम् अधितिष्ठेत्, न छेदनादिकं कुर्यात्, श्रीभगवत्यामपि सकम्पस्य चेष्टावतो जीवस्य भवान्तकरणत्वनिषेधात्, संयमसाधनस्य देहस्य निर्वाहार्थं भिक्षाभ्रमणभोजनशयनादिचेष्टास्तु न निषेद्धुं शक्या, अतो वस्त्रछे-

प्रणम्य परमानन्दसंपन्नं नाभिनन्दनं। संग्रहेऽथोत्तरार्धस्य यते सद्बोधवृद्धये ॥ १ ॥

ननु सांप्रतं यः शिष्यादेः प्रव्राजनादिविधौ गुरुभिर्भगवद् बिम्बेषु वासक्षेपः क्रियते, स द्रव्यस्तवत्वेन साधूनां कर्तुं योग्योऽयोग्यो वा? उच्यते, योग्य एव, प्रव्राजनादिविधौ भगवद् बिम्बेषु वासक्षेपस्य द्रव्यस्तवत्वेऽपि भगवतां यतीनां विधेयतयाऽभ्यनुज्ञानात् न तेषां सर्वथा तन्निषेधः, यदाहुः, पञ्चवस्तुके दीक्षाविधौ श्रीहरिभद्रसूरयः,

तत्तो य गुरू वासे गिण्हिय लोगुत्तमाण पाएसु। देइय तओ कमेणं सव्वेसिं साहुमाईणं ॥ १ ॥

स्वयं निर्ग्रन्थतया श्राद्धोपनीतानामेव वासानां यतिभिः क्षेपो विधेय इत्यादि, इति प्रव्राजनादिविधौ साधूनां भगवद् बिम्बेषु वासक्षेपकरणविचारः ॥ ७६ ॥

ननु जम्बूद्वीपस्थजङ्घाचारणादिसाधवो यदा चैत्यवन्दनार्थं रुचकद्वीपादौ गच्छन्ति तदा अन्तराले लवणसमुद्रान्तर्वर्त्तिषोडशसहस्रयोजनोच्चलवणशिखां कथमतिक्रामन्ति, सचित्तोदकस्पर्शसंभवादिति चेद्? उच्यते, न हि ते आदित एव तिर्यग् गच्छन्ति, किन्तु पूर्वं साधिकसप्तदशसहस्रयोजनानि ऊर्ध्वं गत्वा पश्चात् तिर्यग् गच्छन्तीति, नोदकस्पर्शसद्भावः, यदुक्तं समवायाङ्गसूत्रवृत्त्योः, लवणेणं समुद्दे सत्तरसजोयणसहस्साइं सव्वग्गेणं पण्णत्ते इमीसे णं रयणप्पभाए पुढवीए बहुसम रमणिज्जाओ भूमिभागाओ सातिरेगाइं सत्तरसजोयणसहस्साइं उड्ढं उप्पइत्ता तत्तो पच्छा चारणाणं

भवति, इत्यतः तत्रावस्थातुं न कल्पते इत्यादि, इति साधूनां पूर्वकृतमासकल्पादिस्थाने कियत् कालात् पुनरागमनमिति विचारः ॥ ८१ ॥

ननु साधूनां यथा नवकल्पी विहारस्तथैव साध्वीनामपि भवति उत अन्यथा, इति चेद् ? उच्यते, साधूनाम् अष्टौ मासकल्पा नवमो वर्षा कल्पः, साध्वीनाम् तु एको वर्षाकल्पः चत्वारो मासकल्पाः स्युर्यतस्तासां द्विमासा मासकल्पो भवेत् । यदुक्तं "पञ्चकल्पचूर्णौ"

साहूहिं नव वसही ओ घेतव्वाओ अट्ठ उउबद्धे एगा वासाणं वसही इत्यादि
अज्जाणं पुण पंच वसही ओ घेतव्वाओ कम्हा जम्हा तासिं दुमासं कप्पो

इत्यादि एवं बृहत्कल्पेऽपि बोध्यम्, किञ्च विहारकर्तुकामाः साधुसाध्व्यः पूर्व वसतिं प्रमार्ज्य ततो विहारं कुर्वन्ति, यदुक्तम् ओघनिर्युक्तौ "संमज्जिअपडिस्सया पुव्वंति" संमार्जितप्रतिश्रयाः पूर्व प्रथममेव इत्यर्थः, तत उपधिं गृहीत्वा सञ्जातरं संभाष्य विहारं कुर्वन्तीत्यादि, इति साधुसाध्वीनां मासकल्पकरणभेदादिविचारः ॥ ८२ ॥

ननु क्वचित् क्षेत्रे स्थितानां साधूनां प्राघूर्णकसाध्वागमने को विधिरिति चेद् ? उच्यते, यदा साधूनां भोजनकाले अन्ये साधवः प्राप्तास्तदा वास्तव्यसाधवो निषेधिकाश्रवणाऽनन्तरमेव मुखे क्षिप्तं कवलं भुक्त्वा भाजनगतं तं मुञ्चन्ति, ततस्ते प्राघूर्णकाः संक्षेपेण आलोचनां दत्त्वा मण्डल्यां भुञ्जते, एवमपि यदि तेषाम् आत्मनश्च पूर्वानीतं भक्तं पर्य्याप्यते ततः साधु एव, अथ न

ननु साधवो यत्र स्वयं चतुर्मासीं स्थिता, यत्र च क्षेत्रेऽन्ये संविग्नाश्चतुर्मासीस्थितास्तत्र चेद् वस्त्रादिकं गृह्णन्ति तर्हि कियत् कालाऽनन्तरं गृह्णन्ति ? उच्यते, मासद्वयं परिहृत्य पश्चात् गृह्णन्ति, कारणे तु तन्मध्येऽपि गृह्णीयुरिति "यदुक्तं" बृहत्कल्प-वृत्तौ द्वितीयखण्डे

"सक्खेत्ते परक्खेत्ते वा दोमासे परिहरितु गेण्हंति" जं कारणेण णिग्गयं तं पि वहिज्झोमियं जाणे ॥ १ ॥

स्वक्षेत्रं यत्र आत्मना वर्षाकल्पः कृतः, परक्षेत्रं यत्र अपरे संविग्ना वर्षाकल्पं स्थितास्तत्र, स्वक्षेत्रे परक्षेत्रे वा द्वौ मासौ परिहृत्य तृतीयेमासि वस्त्रादिकं गृह्णन्तीत्यादि "कारणे तु मासद्वयमध्येऽपि गृह्णीयादिति" इति साधूनां चतुर्मास्या अनन्तरं यावत् कालेन वस्त्रादिग्रहणं तद्विचारः ॥ ८० ॥

ननु साधवो यत्राश्रये चातुर्मास्यादिकं स्थितास्तत्र कियत् मासाऽनन्तरं तेषां पुनरवस्थानं कल्पते ? उच्यते, द्वित्रान् मासा-नतिक्रम्य पुनस्तत्रावस्थानं कल्पते, नार्वाक्, यदुक्तम् आचाराङ्गसूत्रवृत्त्योः द्वितीयश्रुतस्कन्धद्वितीयाऽध्ययनद्वितीयोद्देशके "से[1] इत्यादि" ये भगवन्तः साधव आगन्तार आगारादिषु ऋतुबद्धं वर्षा वाऽतिवाह्य अन्यत्र मासमेकं स्थित्वा द्विगुणत्रिगुणादिना मासकल्पेन अपरिहृत्य द्वित्रैर्मासै र्व्यवधानम्, अकृत्वा पुनस्तत्रैव वसन्ति, अयम् एवं भूतः प्रतिश्रय उपस्थानक्रियादोषदुष्टो

१ से 'आगंतारे सु वा ४ जे भवंतारो उउवहियं वा' वासावासियं वा कप्पं उ वातिणा वेत्ता तं दुगुणा दुगुणेण अपरिहरित्ता तत्थेव भुज्जोसवसंति त्ति

साधुर्विभूषार्थं यदि वस्त्रं क्षालयति, वारयति, वा घर्षति, वा संप्रमार्ष्टि वा, तदा प्रायश्चित्तं भवति, तथा मूर्छया यदि वस्त्रं न परिभुङ्क्ते तदाऽपि प्रायश्चित्तमित्यादि, विस्तरार्थिना तु सैव वृत्तिः विलोकनीया इति साधुभिश्छिन्नं वस्त्रं ग्राह्यम् इत्यादि विचारः ७८

ननु साध्व्यः स्वयमेव वस्त्राणि याचन्ते किम्वा साधवो गृहस्थेभ्यो गृहीत्वा ताभ्यो ददति ? उच्यते, नहि ता उत्सर्गतः स्वयं गृह्णन्ति, किन्तु गुरुभिस्ताभ्यो दातव्यानि, यदि साधवो न भवन्ति, तदा स्वयमपि यतनया याचन्ते, यदुक्तं बृहत्कल्पवृत्तौ द्वितीयखण्डे "निर्ग्रन्थीभिरात्मना गृहस्थेभ्यो वस्त्राणि न ग्राह्याणि, किन्तु गणधरेण तासां दातव्यानि, तत्र विधिमाह"

सत्तदिवसे ठवित्ता थेरपरिच्छाऽपरिच्छणे गुरुगा । देइ गणी गणिणीए गुरुगा सयदाण अद्दाणे ॥ १ ॥

इत्यादिः साध्वऽभावे साध्व्यः स्वयम् वस्त्रमुत्पाद्य इदं कुर्वन्ति

सत्तदिवसे ठवित्ता कप्पेते थेरिया परिच्छंति । सुद्धस्स होइ धरणा असुद्धए छेत्तु परिट्ठवणा ॥ १ ॥

व्याख्या सप्तदिवसान् वस्त्रं स्थापयन्ति, यदि अस्थापयित्वा परिभुञ्जते तदा चत्वारो गुरवः आज्ञादयश्च दोषाः, यत एवं ततः स्थापयित्वा कल्पं प्रक्षालनं कुर्वन्ति, कृते च कल्पे स्थविरास्तद् वस्त्रं प्रावृत्य परीक्षन्ते यदि शुद्धं ततस्तस्य धारणं, अथाऽशुद्धम् अशुद्धभावोत्पादकं तद्वस्त्रं ततस्तच् छित्त्वा परिष्ठापनं कर्तव्यमित्यादिः, परिभुक्तानां प्रक्षालनम् अपरिभुक्तानामपि गन्धाढ्यानां प्रक्षालनमित्यर्थः, इह विस्तारार्थिना स एव ग्रन्थो विलोक्यः, इति साध्वीनां वस्त्रग्रहणविचारः ॥ ७९ ॥

१ स्थविरा वस्त्रपरीक्षा कुर्वन्ति

दनादिव्यापारो न विधेयः" इत्थं परेण स्वपक्षे स्थापिते सूरिराह "आरम्भमिठ्ठो जइ" इत्यादि, किञ्च भो नोदक वस्त्रं
छिन्दत एकवारम् इयद् दोपो भवति, अच्छिद्यमाने तु वस्त्रे प्रमाणातिरिक्तं तत् प्रत्युपेक्षमाणस्य ये भूमिलोलनादयः प्रत्युपेक्षणा
दोषा दिने दिने भवन्ति, ये च तद् वस्त्रं संप्रावृण्वतो विभूपादयो बहवो दोपास्तान् अपि विबुध्यस्व "अथ पुनः प्रेरक आह"
यदि वस्त्रच्छेदने युष्मन्मतेऽपि सकृद् दोपः संभवति, ततः परिहियताम् असौ, गृहस्थैः स्वयोगेनैव यद्भिन्नं वस्त्रं तदेव गृह्यताम्
१ उच्यते, "घेतव्वगं" इत्यादि यावत् तद्भिन्नं मार्गयति, तावत् तस्य सूत्रार्थपौरुष्यादौ हानिर्भवति, तथा य एष वस्त्रच्छेदन-
लक्षणो दोपः स प्रत्युपेक्षणाशुद्ध्यादिवहुगुणकलितोऽस्ति, यतः प्रमाणमेव वस्त्रस्य तदानीं साधवः कुर्वन्ति, न पुनस्तत्राऽधिकं
किमपि सूत्रार्थव्याघातादिकं दूषणमस्तीति" किञ्च, यथा प्रयत्नपरस्य साधोराहारनीहारादिविधिविपयः सर्वोऽपि योगो भव-
न्मतेनाऽपि अदुष्टस्तथा उपकरणच्छेदनादिकमपि यतनया क्रियमाणं निर्दोपं द्रष्टव्यम् "यतो द्रव्येण भावेन च चत्वारो भङ्गा
हिंसकत्वे भवन्ति, तथा हि, द्रव्यतो नामैका हिंसा न भावतः १, भावतो नामैका हिंसा न द्रव्यतः २१ एका द्रव्यतोऽपि
भावतोऽपि ३, एका न द्रव्यतो नापि भावतः ४, अत्र च आद्यभङ्गके भगवद्भिरहिंसक एव उक्त इत्यादि" तथा उभयपार्श्व-
च्छिन्नं वस्त्रम् अलक्षणं भवति, मध्ये ऊर्ध्वस्फाटितमपि वस्त्रमलक्षणमेव उपजायते, तद्वस्त्रग्रहणे च प्रत्युतज्ञानादीनाम् उपघातो
भवति, न पुनः कोऽपि गुणोऽतो न तद्ग्रहीतुम् उचितं, किन्तु प्रशस्तवर्णसंस्थानादिलक्षणयुक्त एव उपधिः साधूनां ज्ञानद-
र्शनचारित्रवृद्धिजनकत्वात् वारयितव्यः, ततश्च स्थितम् एतद् विधिनैव तथा वस्त्रं छेदनीयं यथा प्रमाणयुक्तं भवति, अन्यच्च

अभावे अशुद्धमपि यावत्, आधाकर्मेति । प्रमाणतः पुनरध्वानं स्तोकं बहुं वा ज्ञात्वा तदनुसारेण ग्राह्यम् इत्यादि, एवं यतनया यतित्वा यदा अध्वनो निर्गतास्तदा तमध्वकल्पम् अभुक्तं भुक्तोद्धरितं वा परिष्ठापयन्ति, शिष्यः पृच्छति, योऽध्वकल्प आधाकर्म्मिकः परिवासितश्च स तावद् आधाकर्मिकत्वेन उत्तरगुणोपघाती, परिवासितत्वेन तु मूलगुणोपघाती, ततः किम् एष भुज्यतां उत प्रतिदिवसं लभ्यमानम् आधाकर्म, अत्रोच्यते, अध्वकल्पो भुज्यतां न आधाकर्म, ननु दोषद्वयदुष्टोऽसौ, सूरिराह कामम् इत्यादि, कामम् अनुमतं यदि सोऽध्वकल्प एकं तावद् आधाकर्म अपरं च निशि रात्रौ परिवासितः तथापि खलु निश्चितं स एव अध्वकल्पः श्रेयान्, नच आधाकर्म दिने दिने लभ्यमानं वरं, कुत इति चेद् उच्यते, "आधाकम्मेत्यादि", यदा आधाकर्म दिने दिने लभ्यते तद् असकृद् अनेकवारं जीवोपघातः, अध्वकल्पे तु यदा आधाकर्म तत्र सकृतम् एकमेव वारं जीवोपघातः, पूर्वहताश्च ते जीवा न दिने दिने हन्यन्ते,ऽतोऽध्वकल्प एव वरं न आधाकर्म, ये पुनः अविदितप्रवचनरहस्या अध्वकल्पं मूलोत्तरगुणोपघातिनं मत्वा न भुञ्जते, आधाकर्म तु केवलोत्तरगुणोपघातिकम् इति मत्वा दिने दिने भोक्तुमिच्छन्ति, ते अत्यन्तनिर्घृणाः सत्त्वेषु, अत एव न ते मम संमता इति, इत्यपवादतः साधूनां पथि पाथेयरक्षणादिविचारः ॥ ८५ ॥

ननु गोचर्यादौ साधवो गृहस्थस्य गृहद्वारम् उद्घाटयेयुः नवा ? उच्यते, उत्सर्गतस्तु न उद्घाटयेयुः कारणे पुनरुद्घाटयेयुरपि, यदुक्तम् आचाराङ्गसूत्रवृत्त्योर्द्वितीयश्रुतस्कन्धे प्रथमाध्ययनपञ्चमोद्देशके उत्सर्गतः साधुर्गृहद्वारं नोद्घाटयेत् सति करणे अपवादम्, आह, स भिक्षुर्येषां तद्गृहं तेषां सम्बन्धिनम् अवग्रहमनुज्ञाप्य याचित्वा प्रत्युपेक्ष्य प्रमृज्य च गृहोद्घाटनादि

इत्यादिः द्वितीयखण्डे, इति साध्व्यादीनां रात्रौ द्वारपिधानादिविचारः ॥ ८४ ॥

ननु साधवो बहुदिनलङ्घनीये पथि किमपि पाथेयं भोज्यं सार्थे गृह्णन्ति नवा? उच्यते, उत्सर्गतो न गृह्णन्ति एव, अपवादतस्तु गृह्णन्ति, अन्यथा प्रायश्चित्ताऽऽपत्तेः "यदुक्तं बृहत्कल्पभाष्यवृत्त्योर्द्वितीयखण्डे" अग्गहणे, कप्पस्स उ "इत्यादि" छिन्ने अच्छिन्ने वा पथि यदि अध्वकल्पं न गृह्णन्ति तदा चतुर्गुरवः, द्विधा च आत्मसंयमभेदाद् विराधना, तत्राऽऽत्मविराधना भक्ताद्यलाभे क्षुधार्त्तस्य परितापनादिना, संयमविराधना तु क्षुधार्त्तः सन् नध्वकल्पं विना कन्दादिग्रहणं कुर्यात्, अतो गृहीतव्योऽध्वकल्पः, एभिः कारणैः "न गृह्णीयादपि यदि पुरुषाः सर्वेऽपि संहननधृतिबलवन्तः, अध्वाऽपि एकदैवसिको वा? सार्थेऽपि प्रभूतं भैक्षम् अवाप्यते तदपि ध्रुवलाभं सार्थश्च भद्रकः कालभोजी कालस्थायी च, एवमादीनि कारणानि ज्ञात्वा छिन्नपथे न गृह्णीयात्, स पुनरध्वकल्पः कीदृशो ग्रहीतव्य इत्युच्यते "सक्करघयेत्यादि" शर्करया घृतेन च मिश्राणि कदलीफलानि खण्डाखण्डीकृतानि गृह्यन्ते शर्कराऽभावे गुडेन तद् अप्राप्तौ सक्तुकान् घृतगुडमिश्रान् इत्यादि, एतानि स्तोकानि अपि क्षुधां घ्नन्ति" न च तृषां कुर्वन्ति अतस्तद् ग्रहणम् उचितं, तद् अलाभे शुष्कोदनशुष्कमण्डकतन्दुलचूर्णादिकं घृतगुडेन मिश्रयित्वा स्थाप्यं, यदि शुद्धं भक्तं लभन्ते ततो नाऽध्वकल्पं भुञ्जते, यावत् मात्रेण वा न्यूनं शुद्धं लभन्ते तावन् मात्रमध्वकल्पं परिभुञ्जते, अनुपस्थापितेभ्यो वा प्रयच्छन्ति, तथा तादृशे मार्गे औषधानि अपि सार्थे ग्राह्याणि, सर्वमपि एतदध्वकल्पादिकं प्रथमतः शुद्धं तद्

१ उपवासविशेष इत्यर्थः.

ननु साधुसाध्व्यो रात्रौ वसतिद्वारं स्थगयन्ति नवा ? उच्यते, साध्व्योऽवश्यं द्वारं स्थगयन्ति, जिनकल्पिकसाधवस्तु सर्वथा द्वारं नैव स्थगयन्ति, स्थविरकल्पिकाः पुनः कारणे यतनया स्थगयन्ति, यतो बृहत्कल्पभाष्यवृत्त्योरित्थमेव उक्तमस्ति, तथा च संक्षेपतस्तत्पाठः "साध्वीभिः निशि अवश्यं कपाटादिना वसतिद्वारं स्थगनीयम्, अन्यथा प्रायश्चित्ताऽऽपत्तेः" जिनकल्पिकास्तु सर्वथा द्वारं नैव स्थगयन्ति निरपवादानुष्ठानपरत्वात् तेषां, तथा च जिनानां भगवतां इयम् आज्ञाऽस्ति यत् स्थविरकल्पिकाः कारणे यतनया द्वारं स्थगयन्ति, आह किं तत् कारणं येन द्वारं पिधीयते, उच्यते

पडिणीअ तेण सावय उब्भामगगोण साणणप्पज्ज । सीयं व दुरहियासं दीहा पक्खी वा सागरिए ॥ १ ॥

व्याख्या उद्घाटिते द्वारे प्रत्यनीकः प्रविश्य हननम् अपद्रावणं वा कुर्याद्, उपधिस्तेनाः शरीरस्तेना वा प्रविशेयुः, एवं स्वापदाः सिंहव्याघ्रादयः, उद्भ्रामकाः पारदारिकाः, गौः बलीवर्दः, श्वानः प्रतीताः, एते वा प्रविशेयुः "अणप्पज्झत्ति" अनात्मवशः क्षिप्तचित्तादिः, स द्वारेऽपिहिते सति निर्गच्छेत्, शीतं वा दुरधिसहं हिमकणानुषक्तं निपतेत्, दीर्घा वा सर्प्पाः, पक्षिणो वा काककपोतप्रभृतयः प्रविशेयुः, सागारिको वा कश्चित् प्रतिश्रयम् उद्घाटद्वारं दृष्ट्वा तत्र प्रविश्य शयीत वा विश्रामं वा गृह्णीयात्

"एक्के क्कम्मि उ ठाणे चउरो मासा हवंति उग्घाया[1]" । आणाइणो य दोसा विराहणा संजमायाए ॥ १ ॥

१ उद्घातो भागपातः प्रायश्चित्तम् भवति.

पर्य्याप्यते ततः सर्वं तेभ्यः प्राघूर्णकेभ्यो दत्त्वा भक्तम्, अन्यद् गृहं पर्यटन्ति वास्तव्यभिक्षवः, एवमानीय कति दिनानि भक्तं प्राघूर्णकेभ्यो दीयते इत्यत आह

**तिन्नि दिणे पाहुण्णं सव्वेसिं असहबालवुड्ढाणं। जे तरुणा सग्गामे वत्थव्वा बाहिं हिंडंति ॥ २२ ॥**

त्रीणि दिनानि प्राघूर्णकत्वं सर्वेषां असहबालवृद्धानां कर्त्तव्यं, ततश्च ये प्राघूर्णकास्ते स्वग्रामे एव भिक्षाम् अटन्ति, वास्तव्यास्तु बहिर्ग्रामे हिण्डन्ति, अथ ते प्राघूर्णकाः केवला हिण्डितुं न जानन्ति, ततः संघाटकसंयोगः क्रियते, एको वास्तव्य एकश्च प्राघूर्णक इत्यादिः "अन्यच्च" संभोइआ ते चेवत्ति, अथ साम्भोगिकास्तत्र ग्रामे भवन्ति ततस्ते "चेवत्ति"त एव वास्तव्याः साधवो भैक्ष्यम् आनयन्ति, अथ तत्र साम्भोगिकसमीपे प्राप्तमात्राणां कश्चित् श्रावक आयातः स च प्राघूर्णकवत्सल एवं भणति, यद् उत मदीये गृहे भिक्षार्थ साधुः प्रहेतव्यः, तत्र उच्यते वास्तव्या एवागमिष्यन्ति अथैवमुक्तेऽपि निबन्धन्ति निर्बन्धं करोति आग्रहं करोति असौ श्रावकस्ततः "वत्थव्वेणं" वास्तव्येन सहैकेन गन्तव्यं, यतः स एव वास्तव्यः प्राघूर्णकानां प्रमाणम् अल्पाधिकवस्तुग्रहणे इत्यादिः, 'ओघनिर्युक्तिसूत्रवृत्तिपाठः संक्षेपेण अत्र लिखितोऽस्ति तं पर्यालोच्य प्राघूर्णकविधिः ज्ञेयः, किञ्च' एकसामाचारीकान् साधून् आश्रित्याऽयं विधिरुक्तो भिन्नसमाचारीकांस्तु पीठफलकादिना निमन्त्रयेत् न अशनादिना, यदुक्तमाचाराङ्गसूत्रवृत्त्योर्द्वितीयश्रुतस्य सप्तमाऽध्ययनप्रथमोद्देशके "से इत्यादि" पूर्वसूत्रवत् सर्वं, नवरम्, असांभोगिकान् पीठफलकादिना उपनिमन्त्रयेत् यतस्तेषां तदेव पीठफलकादि संभोग्यं नाऽशनादिकमिति। इति साधूनां प्राघूर्णकसाध्वागमने यो विधिस्तद् विचारः॥८३॥

इयाहिं वंदिअव्वा जइ न वंदंति पायच्छित्तं विसंभोगो वा, पासत्थाइ यचउक्केसु जइ वंदंति तो पायच्छित्तं विसंभोगो वा, जइ संजई अन्नसंभोइअसंविग्गं न वंदइ ॥ ४ ॥ पायच्छित्तं विसंभोगो वा संजईण सट्ठाणे तदेव "वचसा नमस्कारो वन्दनमित्यर्थः" एवं संभोइअस्स पणामं करेइ, संभोगो जहेव वंदणे तहेव पणामे सिरेण पणामं करेइ संजओ संभोइओ संभोइअस्स अंजलिपग्गहं करेइ संभोगो जहेव वंदणे तहेव अंजलि पग्गहे हत्थेण, संजईहिं पुण संजयाण अंजलिपग्गहो न कायव्वो, जइ करेइ पच्छित्तं ४ विसंभोगो वा ण वरि जाहे संजयपासे कारणे पढइ ताहे अंतो संघाडीए अंजलिं काऊण पढिज्जइ, जइ बाहिं करेंति पायच्छित्तं, विसंभोगो वा जइ गुरूण चक्खु आलोए पणामं न करेइ पायच्छित्तं "इत्यादिः" इति साधुसाध्वीनां ये वन्द्या ये च न वन्द्यास्तद्विचारः ॥ ८८ ॥

ननु साधुसाध्वीगृहस्थादीनां परस्परं वस्त्रादिदानग्रहणव्यवहारः कथम् अस्तीति चेद् ? उच्यते, उत्सर्गतः साधुभिरेकसामाचारीकसाध्वीभ्यो वस्त्रपात्राणि दातव्यानि, कस्मिंश्चित् कारणे सति आहारोऽपि दातव्यः, परं तासां समीपे न किमपि ग्राह्यं, तथा गृहस्थादिभ्यो ग्रहीतव्यं न पुनस्तेभ्यः किमपि दातव्यं, निष्कारणे यदि ददाति तदा प्रायश्चित्तम् तथा। सांभोगिकसाधुभ्यो दातव्यं ग्रहीतव्यं च तत्सकाशात्, तथा पार्श्वस्थादिभ्यो न दातव्यं न पुनस्तेभ्यः किमपि ग्रहीतव्यं, यदुक्तं पञ्च कल्पचूर्णौ"

१ प्रायश्चित्तम्

प्रायश्चित्तं चतुर्लघुकमित्यादिः "अन्यच्च चरणकरणहीने केवलद्रव्यलिङ्गयुक्ते यत् यादृशं वन्दनं क्रियते तादृशम् अहं वक्ष्ये"

**वायाइ नमोक्कारो हत्थुस्सेहो य सीसनमणं च "संपुच्छणऽच्छणं त्थोभवंदणं वंदणं वा वि"**

बहिरागमनपथादिषु दृष्टस्य पार्श्वस्थादेः वाचा नमस्कारः क्रियते "वन्दामहे भवन्तं वयमित्येवम् उच्चार्यते इत्यर्थः" अथाऽसौ विशिष्टतर उग्रतरस्वभावो वा ततो वाचा नमस्कृत्य हस्तोत्सेधम् अञ्जलिं कुर्यात्, ततोऽपि विशिष्टतरे अत्युग्रस्वभावे वा द्वावपि वाग्नमस्कारहस्तोत्सेधौ कृत्वा तृतीयं शिरःप्रणामं करोति "संपुच्छणंति" पुरतःस्थित्वा भक्तिम् अवदर्शयता शरीरवार्त्तायाः संप्रच्छनं कर्तव्यम् कुशलं भवतां वर्त्तते इति" अच्छणंति "शरीरवार्त्तां प्रच्छयित्वा क्षणमात्रं पर्युपासनम्, अथवा पुरुपविशेषं ज्ञात्वा तदीयप्रतिश्रयम् अपि गत्वा स्तोभवन्दनं संपूर्णं वा वन्दनं दातव्यम् इत्यादि, यतः पार्श्वस्थादेर्वन्दनकेऽक्रियमाणे संयमात्मविराधनादिकं पश्यति तं प्रति वाचा कायक्रियया वा तथा चेष्टते, यथा तस्य स्वल्पमपि अप्रीतिकं न भवति, अथ अवन्दनेऽपि कोऽप्यपायो न भवति ततो दूरतस्तं वर्जयेत्, इत्यादिः तृतीयखण्डे" तथा पञ्चकल्पचूर्णौ पुनरयं पाठः "**जइ संभोइओ संभोइयं न वंदइ पायच्छित्तं विसंभोगो वा, संभोइओ संविग्गमन्नसंभोइअं वंदइ संभोगो न वंदइ पायच्छित्तं विसंभोगो वा, इयरेसिं पासत्थाईणं जइ वंदणं करेइ पायच्छित्तं[1] विसंभोगो वा संभोइओ संजओ संभोइयाओ संजइए पुव्वं वंदइ ४ अन्न संभोइयाण वि एमेव संजइओ एमेव ताहिं संभो-**

---

1 चतुर्लघुप्रायश्चित्तम्

वन्द्या एव, अपवादपदे पुनर्वन्दनीया अपि बृहत्कल्पभाष्यादौ एवमेव उक्तत्वात्, तथा च संक्षेपतस्तत्पाठः "अंतो इत्यादिः" अन्तरपि श्रेणेरभ्यन्तरतः स्थितानामपि वन्दनकं प्रतीत्य भजना भवति, कथम् इत्याह "ओमिति" योऽवमरात्निकः स आलोचनादौ कार्ये वन्द्यते अन्यदा तु नेति "आवन्निति" आपन्नपरिहारिको न वन्द्यते, स पुनराचार्यान् वन्दते, संयत्योऽपि उत्सर्गतो न वन्द्यन्ते, अपवादपदे तु यदि बहुश्रुता महत्तरा काचिद् अपूर्वं श्रुतस्कन्धं धारयति ततस्तस्याः सकाशात् तत्र ग्रहीतव्ये उद्देशसमुद्देशादिषु साफेटावन्दनकेन वन्दनीया, न केवलम् अन्तः, किन्तु श्रेणेर्बहिरपि स्थितानां कृतिकर्मणि भजना मन्तव्या कारणे तेषामपि कृतिकर्मविधेयमिति भावः, अथ न कुर्वन्ति ततो महान् दोषो भवति, यथा अजापालकवाचकम् अवन्दमाना अगीतार्थाः शिष्या दोषं प्राप्तवन्त इति वाक्यशेषः "इत्यादिः" अथ अजापालकदृष्टान्तमाह "केनचिद् आचार्येण गीतार्थाऽभावे अगीतार्थाः साधवः प्रत्यन्तपल्ल्यां क्षेत्रप्रत्युपेक्षकाः प्रेषिताः, तत्र च भ्रष्टव्रत एको वाचको राजकुले यत् कृतप्रमाणः परिवसति, ते च प्रत्युपेक्षितक्षेत्राः साधव स्तं वाचकं लोकस्य समीपे पृच्छन्ति, कुत्राऽसौ तिष्ठति लोकेनोक्तम् अरण्ये, ततस्तेऽपि तत्र गतास्तं च अजारक्षणप्रवृत्तं भ्रष्टव्रतं दृष्ट्वाऽद्रष्टव्योऽयम् इति विमृश्याऽगीतार्थत्वेन शनैः शनैः अवष्वष्कन्ते, तांश्च तथा दृष्ट्वा वाचकस्य शङ्का, किमेते अपसर्पन्तीति "नूनं मां भ्रष्टव्रतं ज्ञात्वा, ततः शङ्काच्छेदी स वाचकः कुपितः सन् पल्लीपतेः कथयित्वा तेषाम् अगीतार्थानां रुम्भणं गुप्तौ प्रक्षेपणं कृतवान्, ततस्तदन्वेषणार्थं गुरूणां तत्रागमनं ते च तं वाचकं वन्दित्वाऽशैक्षका अगीगार्था एते इत्यादि उक्त्वा स्वशिष्यान् मोचितवन्तः" एवं श्रेणिबाह्यानामपि वन्दनकं कर्त्तव्यम्, अथ यो न करोति तस्य

कुर्यादिति एतदुक्तं भवति, स्वतो द्वारम् उद्घाट्य न प्रवेष्टव्यमेव यदि पुनर्ग्लानाचार्यादिप्रायोग्यं तत्र लभ्यते, वैद्यो वा तत्राऽऽस्ते, दुर्लभं वा द्रव्यं तत्र भविष्यति, अवमोदर्ये वा सति, एभिः कारणैरुपस्थितैः स्थगितद्वारव्यवस्थितः सन् शब्दं कुर्यात्, स्वयं वा यथाविधि उद् घाट्य प्रवेष्टव्यमिति" इत्यपवादतः साधुभिर्गोचर्यादौ गृहस्थस्य गृहद्वारमुद् घाटनीयमितिविचारः ॥ ८६ ॥

नन्तु केचिद् आधुनिका निह्नवा पाखण्डिनः स्वभोजनपात्रे एव मूत्रं विधाय तेन तत्पात्रं मुखवस्त्रादिकं च प्रक्षालयन्ति, तद् युक्तम् अयुक्तम् वा ? उच्यते अयुक्तमेव इदमिति संभाव्यते बृहत्कल्पभाष्यवृत्त्यादौ एतत्करणे प्रायश्चित्तस्य उक्तत्वात् "तथा च संक्षेपतस्तत्पाठः "वइगा अद्धाणे वा" इत्यादिः, यश्च मोकेन पात्रकम् आचामति तस्याऽपि चतुर्गुरवः प्रायश्चित्तं, कुत इत्याह" यदि मोकेन धावति तदाऽशैक्षाणामन्यथा भावो विपरिणमनं भवेत्, विपरिणताश्च प्रतिगमनादीनि कुर्युः ॥ द्वितीये च दिवसे भिक्षार्थं पात्रके प्रसारिते सति कायिक्याः कुथितो गन्धः समायाति, ततो लोकः प्रवचनावर्णवादं कुर्याद्, अहो अमीभिरस्थिकापालिका अपि निर्जिता यदेवं पात्रकं प्रश्रवणेन आचामन्ति इति, आदिग्रहणेन श्रावकाणां विपरिणामो भवतीत्यादिपरिग्रहः, यत्तु आचाराङ्गादौ मोकप्रतिमा श्रूयते तद् अभिग्रहरूपत्वेन कादाचित्कत्वात् न प्रवाहपथम् अवतरतीति न कश्चिद् विरोधः, इति साधूनां प्रश्रवणेन पात्रादिक्षालनमयुक्तमितिविचारः ॥ ८७ ॥

नन्तु वृद्धसाधुभिर्लघुसाधवो वन्द्यन्ते न वा, तथा साधुभिः साध्व्यः पार्श्वस्थादयश्च वन्द्या न वा ? उच्यते, उत्सर्गतस्तु न

---

१ स्थूलभद्रमुनेर्वेश्यागृहनिवासादिवत्

सणचरित्तमनोकरणाइच्चातिकरणसोही न भवइ "गाहा" खेत्तहिरण्णं जया पुण पुव्वपवत्ताणि खेत्तहिरण्णदुपयचउप्पयाइं जया भंडं वा चेइयाणं लिंगत्था वा चेइअदव्वं राउलबलेण खायंति रायभडाई वा अच्छिदेज्जा तया तवनियमसंपउत्तो वि साहू जइ न मोएइ वा वारं वा न करेइ तया तस्स नाणाइसुद्धी न भवइ असायणा य भवइ एवं समुप्पण्णे कज्जे रायाईणं पुव्वं अणुसिट्ठी कीरइ, धम्मो वा से कहिज्जइ, अणिच्छंतस्स अंतद्धाणेण वा अवहरंति, उसोवेउं पासायं वा कंपेति" किमिदम् इत्यादिः जेसलमेरुस्थताडपत्रपुस्तकस्य त्रिषष्ट्यधिकशततम १६३ पत्रे, तथा

कुलगणसंघचेइयविणासाईसु कारणेसु नाणदरिसणचरित्ताइयं पडिसेवमाणो सुद्धो जयणाए ॥१९८॥ त्तिपाठः

अष्टनवत्यधिकैकशते पत्रे, इति समर्थसाधोरापद्गतसाधुपार्श्वस्थादिसाहाय्यकरण १ चैत्यनिमित्ताऽपूर्वद्रव्याऽनुत्पादन २ चैत्यद्रव्यापहारकादिदुष्टजनशिक्षादानादि ३ विचारः ॥ ९१ ॥

ननु चैत्यगृहे जिनप्रतिमोपरिभ्रमरीगृहादिकं चेद् भवेत् तर्हि तादृग् उपयुक्तश्राद्धाद्यभावे सुसाधुना स्वयं तदपनयनं कार्यं न वा, उच्यते, अल्पदोषत्वात् कर्त्तव्यमेव, अन्यथा गुरुप्रायश्चित्ताऽऽपत्तेः, यदुक्तम् बृहत्कल्पभाष्यादौ ॥

लूआकोलिगजालिगकोत्थलहारी अ उवरिगेहे अ साडिंतमसाडिंते लहुगा गुरुगा य भत्तीए ॥ १ ॥ त्ति

अयमर्थः कोऽपि महात्मा काऽपि ग्रामादौ जिनप्रसादं दृष्ट्वा चैत्यं नमस्कर्त्तुं मध्ये गतः, तत्र कथंचिद् असंमार्ज्यमाणे चैत्ये

चैत्यनिमित्तम् अपूर्वं रूप्यस्वर्णादिद्रव्यम् उत्पाद्यते नवा ॥ ३ ॥ 'उच्यते' चारित्रवतः साधोः सर्वप्रयत्नेन साहाय्यं कर्त्तव्यं चारित्रहीनस्य तु एकवारं कृत्वा उपालम्भो देयः, यदि पुनरेतादृग् अकार्यं करिष्यसि तर्हि त्वां न मोचयिष्याम इति, मर्यादाप्रतिपन्नः साधुर्मोचितः सन् यदि पुनरपि गृह्यते तर्हि शतवारान् अपि मोचनीयः "पञ्चकल्पचूर्णौ इत्थमेव उक्तत्वात् तथा च संक्षेपतस्तत्पाठः" समत्थेण साहुणा लिंगत्थाणं वि साहज्जं कीरइ "तत्र" चारित्रस्थितस्य सर्वप्रयत्नेन कर्त्तव्यं "यः पुनश्चारित्रहीनस्तस्य सकृत् कार्यं" तस्स पुणो काउं उवालब्भइ जइ पुणो एरिसं करेसि तो ते ण मोएमो, लिंगं अणुमुयंतस्स जीविया पोढस्स अपुट्ठधम्मस्स वि कीरइ जहेव संविग्गस्स "इत्यादिः" कयाइ मोइओ संतो पुणोवि घेपिज्जा किं मोएयव्वो न मोएअव्वो" उच्यते "सयं पि वारा मोएयव्वो मज्जायापडिवन्नो" इत्यादिः १ "तथा चैत्यनिमित्तं नवीनं रूप्यसुवर्णादिद्रव्यं साधुना नोत्पादनीयं गृहस्थकृत्यत्वात् तस्येति, यदि उत्पादयति तर्हि तस्य ज्ञानदर्शनचारित्रादिशुद्धिर्न भवति, पञ्चकल्पचूर्णौ निषिद्धत्वात्, तत्पाठस्तु अग्रे दर्शयिष्यते" २ तथा पूर्वप्रवृत्तानि चैत्यसम्बन्धिक्षेत्रहिरण्यभाण्डादीनि, यदि लिङ्गस्था राजबलेन अपहरन्ति, राजभटादिर्वा अपहरेत्, तर्हि तपोनियमसंप्रवृत्तोऽपि साधुर्यदि न मोचयति उद्यमं वा न करोति तदा तस्य ज्ञानादिशुद्धिर्न भवति, अशातना च भवति, कथं मोचयति तत्र उच्यते, एवं कार्ये समुत्पन्ने सति राजादीनाम् पूर्वं मधुरवाक्यैरनुशिष्टिः क्रियते, धर्मो वा कथ्यते, तद् अनिच्छतां च प्रासादकम्पनादिना भयपीडादिकं समुत्पाद्य शिक्षा कर्त्तव्या "यदुक्तं पञ्चकल्पभाष्यचूर्ण्यादौ" चेइअ निमित्तं रूप्पहिरण्णसुवण्णं अपुव्वं उप्पाएइ तस्स नाणदं-

विजयो ह्यत्र सन्नीत्या दुर्लभस्तत्त्ववादिनः । तद्भावेऽप्यन्तरायादिदोषोऽदृष्टविघातकृत् ॥ १३ ॥
परलोकप्रधानेन मध्यस्थेन तु धीमता । स्वशास्त्रज्ञाततत्त्वेन धर्मवाद उदाहृतः ॥ १४ ॥
विजयेऽस्य फलं धर्मप्रतिपत्त्याद्यनिन्दितम् । आत्मनो मोहनाशश्च नियमात् तत्पराजयात् ॥ १५ ॥

इति तत्र साधुभिर्धर्मवाद एव कारणे सति कर्त्तव्यो नाऽन्यौ द्वौ, सोऽपि साध्वीभिः सह न कर्त्तव्य एव, ताभिरपि तैः सह नैव कर्त्तव्यः प्रायश्चित्तापत्तेः, एवम् एकसामाचारीकसाधुभिः सह पार्श्वस्थादिभिश्च सह निष्कारणे वादो न कर्त्तव्य एव, कारणे तु करणीयोऽपीति "यदुक्तं पञ्चकल्पचूर्णौ"

संभोइओ संभोइएण समं वायं करेइ कारणे । परिक्खणानिमित्तं संभोगो सो पुण ॥

छलजातिहेत्वाभासविवर्जितः पक्षप्रतिपक्षपरिग्रहो वादः संभोइओ संभोइएण समं निक्कारणे वादं करेइ पायच्छित्तं विसंभोगो वा, एवं पासत्थाईहिं वि कारणे पुण जइ न करेइ पायच्छित्तं विसंभोगो वा, संजईहिं संभोइयो संभोइयाहिं कारणे निक्कारणे वा वायं करेइ पायच्छित्तं विसंभोगो वा एवमेव "संजईण वा" इत्यादि ॥ इति त्रिविधवादस्वरूपकथनपूर्वकं साधूनां वादकरणाऽकरणविचारः ॥ ९० ॥

ननु समर्थेन सुसाधुना दुष्टनृपादिभिर्बाध्यमानानां सुसाधूनां यथा साहाय्यं क्रियते तथा चारित्रहीनानां लिङ्गस्थानामपि क्रियते नवा ॥ १ ॥ तथा चैत्यद्रव्यापहारिणां चैत्यादिविनाशकारिणां वा दुष्टनृपादीनां शिक्षादि क्रियते नवा ॥ २ ॥ तथा

दाणग्गहण संभोगे चउभंगो दानसंभोगो नामेगो नो गहणसंभोगो ॥ १ ॥ दाणसंभोगो उस्सग्गेण संजईणं संजएहिं वत्थपत्ताइं दायव्वाणि कारणम्मि य आहारो ताणंतिगे न किंचि घेत्तव्वं गहणसंभोगो ॥ २ ॥ गिहत्थन्नतित्थिएहिं तो तेसिं न किंचि दिज्जइ जइ तेसिं निक्कारणे देइ पायच्छित्तं विसंभोगो वा, दाणसंभोगो गहणसंभोगो य ॥ ३ ॥ संभोइआणं दिज्जइ घेप्पइ य पासत्थाईणं ण दिज्जइ नय घेप्पइ ॥ ४ ॥ किंचि जइ तेसिं देइ गिण्हइ वा किंचि निक्कारणे पायच्छित्तं विसंभोगो वा "इत्यादि" इति साध्वादीनां परस्परं वस्त्रादिदानग्रहणचतुर्भङ्गिकाविचारः ॥ ८९ ॥

ननु कति विधो वादः, स पुनः केन सार्द्धं साधुभिः कर्त्तव्यः केन च नेति चेद् ? उच्यते, त्रिविधो वादः शुष्कवादो १ विवादो २ धर्मवादश्चेति ३ तेषां लक्षणानि तु उत्तराध्ययनवृत्तौ षोडशाध्ययने उक्तानि अमूनि ॥

शुष्कवादो विवादश्च धर्मवादस्तथापरः । "राजन् नेप त्रिधावादः कीर्तितः परमर्षिभिः" ॥ ९ ॥
अत्यन्तमानिना सार्धं क्रूरचित्तेन वा दृढं । धर्मद्विष्टेन मूढेन शुष्कवादः प्रकीर्त्तितः ॥ १० ॥
विजयेऽस्यातिपातादि लाघवं तत्पराजयात् । धर्मस्येति द्विधाऽप्येषः तत्त्वतोऽनर्थवर्धनः ॥ ११ ॥
लं१धिख्यात्यार्थिना तु स्याद् दुःस्थितेनाऽमहात्मना । छलजातिप्रधानो यः स विवाद इति स्मृतः ॥ १२ ॥

१ लाभार्थिना दुःस्थितेन ख्यात्यर्थिना अमहात्मना इति सम्बन्धः.

ननु ग्लानसाधोः प्रतिचरणे यथा ऐहिको गुणः साधुकारप्राप्यादिस्तथा पारलौकिकोऽपि कश्चिद् गुणो विद्यते नवा, उच्यते, अस्ति एव, आगमे तस्य तीर्थकरभक्तितुल्यत्वेन अभिधानात् अर्हद्भक्तेस्तु परत्र स्वर्गापवर्गहेतुत्वाद् इति "यदुक्तम् ओघनिर्युक्तिवृत्तौ "गिलाणत्ति" साधुः कदाचित् तत्र ग्रामे प्रविष्ट इदं शृणुयाद् यद् उत अत्र ग्लान आस्ते, ततश्च तत्परिपालनं कार्यं परिपालने च कथं न पारलौकिका गुणा इति ॥

जो गिलाणं पडियरइ सो मं पडियरइ जो मं पडियरइ सो गिलाणं पडियरइ त्ति"

वचनप्रामाण्यादित्यादि, तथा बृहत्कल्पवृत्तौ प्रथमखण्डेऽपि उक्तं ॥

जो गिलाणं पडियरइ से ममं नाणेणं दंसणेणं चरित्तेणं पडिवज्जइ "इत्यादि भगवदाज्ञाऽऽराधनादिति" इति ग्लानसाधुप्रतिचरणं भगवद्भक्तिवत् महाफलमितिविचारः ॥ ९८ ॥

ननु सुसाधुना ग्लानस्य पार्श्वस्थादेः प्रतिचरणं कर्त्तव्यं नवा, उच्यते, जनापवादवारणार्थं सन्मार्गावतारणार्थं च स्वोचितं कर्म कर्तव्यमेव यदुक्तम् ओघनिर्युक्तौ

"एस गमो पंचण्ह वि नीयाईणं गिलाणपडियरणे"। फासुअकरणनिकायण कहणपडिक्कामणागमणं ॥२२॥
संभावणे वि सद्दो देउलियखरंटजयणउवएसो अविसेसे निन्हगाण वि न एस अम्हं तओ गमणं ॥२३॥
तारेहि जयणाकरणं अमुगं आणेहऽकप्पजणपुरओ नवि एरिसिया समणा जणणाए तो अवक्कमणं ॥ २४ ॥

इत्यादिरत्र बहुविस्तारः स ओघनिर्युक्तेरवगन्तव्यः, इति साधूनां शयनसमये परस्परान्तरविचारः ॥ ९६ ॥

ननु पथि गच्छता साधुना कस्मै मार्गः प्रष्टव्यः, उच्यते, बालाय स्थविराय च पुंस्त्रीनपुंसकरूपाय न प्रष्टव्यः, किन्तु मध्यमवयस्कपुरुषद्वयाय प्रष्टव्यस्तत्रापि साधर्म्मिकगृहस्थद्वयाय तदभावे अन्यधार्मिकमध्यमपुरुषद्वयाय धर्मलाभपुरस्सरं प्रियपूर्वकं प्रच्छनीयम्, शेषेषु अष्टसु भेदेषु दोषा भवन्ति, पृच्छतः ते एव दोषाः समधिकाः, संयतीवर्गे संयतीविषये पृच्छतः सतः, के च ते दोषा इत्याह ॥

थेरो पहं न जाणइ बालपवंचे न जाणइ वा वि ॥ पंडित्थिमज्झिसंका इयरे न जाणंति संका य ॥ ४९ ॥

क तर्हि व्यवस्थितेन प्रच्छनीयम् इत्याह ॥

पासट्ठिओ पुच्छिज्जा वंदमाणं अवंदमाणं वा अणुवइऊण व पुच्छेज्जा तुण्हिक्कं नेय पुच्छेज्जा ॥ ५० ॥

पार्श्वे स्थितः समीपे व्यवस्थितः पृच्छेत्, किं विशिष्टं सन्तं पृच्छेत् वन्दनं कुर्वाणम् अकुर्वाणं वा अथ असौ समीपम् अतिक्रम्य यात्येव ततोऽनुव्रजनं वा कृत्वा कतिचित् पदानि गत्वा प्रष्टव्यः, अथाऽसौ पृच्छ्यमानोऽपि न किंचिद् वक्ति तूष्णीं व्रजति ततो नैव प्रच्छनीय इति, यदा तु तादृग् पुरुषद्वयं नास्ति तदा दृढस्मृतिवृद्धादिरपि यतनया पृच्छ्यः "इत्यादि ओघनिर्युक्तौ" इति साधूनां पथि मार्गप्रश्नविचारः ॥ ९७ ॥

---

१ स्थविरादिषु पृच्छतः. २ बालो हास्यादिना प्रपञ्चं करोति अथवा पथं न जानाति

सचित्ततां न यातीत्यादि, वस्त्रप्रक्षालनानन्तरं,, कल्लाणन्ति,, पश्चात् तस्य प्रक्षालनप्रत्ययं एककल्याणकं प्रायश्चित्तं दीयते, उपवासद्वयरूपम् इत्यर्थः, इत्यादिः सर्वोऽपि अधिकारस्तत्रैव बोध्यो यस्तु आचाराङ्गे "न धोइज्ज इत्यादिपाठः स तु प्रायो जिनकल्पिकाऽपेक्ष इति ज्ञेयम्, इति साधूनां वस्त्रप्रक्षालनविचारः ॥ ९३ ॥

ननु यदि वस्त्रेषु यूकाः समुत्पद्यन्ते तर्हि प्रक्षालनसमये को विधिः, उच्यते, वस्त्रान्तरितहस्तेन अन्यस्मिन् वस्त्रे षट्पदीसंक्रामणं कृत्वा पश्चात् तत्प्रक्षालनं कार्यमिति "यदुक्तम्, ओघनिर्युक्तिसूत्रवृत्त्योः" तत्र च षट्पदीसंक्रामणं कथमित्याह ॥ "जयणा संकामणा" यतनया वस्त्रान्तरितहस्तेन अन्यस्मिन् वस्त्रे षट्पदीः संक्रामयन्ति ततो धावन्ति, इत्यादि, इति साधूनां वस्त्रान्तरे यूकासंक्रमणविधेर्विचारः ॥ ९४ ॥

ननु स्थण्डिलं व्रजन्तः कियन्तः साधवः संभूय गच्छन्ति कियद् उदकं च सार्थे गृह्णन्तीति चेद् ? उच्यते, ओघनिर्युक्त्युक्तम् इदमुत्तरम् "दो दो गच्छंति" द्वौ द्वौ गच्छतो न एकैको गच्छति, तत्र च "तिण्हड्डवं तु घेत्तूण" त्रयाणां साधूनाम् अर्थे यावद् उदकं भवति तावन् मात्रं तौ गृहीत्वा व्रजतः परं न युगलितौ समश्रेणिस्थौ" इत्यादि "विस्तरार्थिना तु सैव विलोक्या, पुनस्तदा इष्टका चीरादिमयानि डगलानि पुतप्रोञ्छनार्थं गृह्यन्ते, इति बृहत्कल्पवृत्तौ" इति साधूनां स्थण्डिलगमनविधेर्विचारः ॥ ९५ ॥

ननु साधवः परस्परं कियत् अन्तरिताः स्वपन्ति पात्रेभ्यश्च कियद् दूरं स्वपन्ति "उच्यते" उत्सर्गतः परस्परं हस्तद्वयाऽन्तरिताः स्वपन्ति अन्यथा अनेकविधदोषसंभवात्, तथा पात्रेभ्यो विंशत्यङ्गुलानि दूरे स्वपन्ति नाऽधिकं मूषिकादिनिवारणार्थम्

भगवत्प्रतिमाया उपरिष्टात् लूताकौलिक जालिकभ्रमरीगृहादिकं दृष्ट्वा च यदि उपेक्षां कुर्वीत, कोऽर्थो यदि स्वयं तन् न दूरीकुर्यात् तदा गुरुप्रायश्चित्तं प्राप्नोति, तत्करणे तु लघुप्रायश्चित्तमिति, एवं जिनप्रतिमोपरि आशातनाहेतुवृक्षादीन् अपि आश्रित्य वोध्यम्, इति सुसाधूनां जिनप्रतिमाऽऽशातनानिवारणविचारः ॥ ९२ ॥

ननु साधुभिर्वस्त्राणि कदा प्रक्षालनीयानि, अप्रक्षालने च को दोषः, उच्यते, वस्त्राणि वर्षाकालाद् अर्वागेव प्रक्षाल्यानि, अथ न प्रक्षाल्यन्ते तत एते दोषा भवन्ति ॥

**अइभारवुडणपणए सीयलपावरणऽजीरगेलन्ने । ओभावण कायवहो वासासु अधावणे दोसा ॥**

मलेन अतिगुरूणि भवन्ति, तथा, वुडणत्ति, जीर्यन्ते पनकश्च तत्र लगति, ( पनकः ) ( फुल्ली ) शीतलप्रावरणे चाऽजीर्णं भवति, ततश्च ग्लानता भवति,, तथा "ओहावणेति" परिभवो भवति कायवधश्च भवति, तानि हि आर्द्राणि श्च्योतन्ति सन्ति अप्कायादीन् विनाशयन्ति, एते वर्षासु अप्रक्षालने दोषाः, कदा प्रक्षालनं कार्यमित्याह ॥

**अप्पत्ते चिअ वासे सव्वं उवहिं धुवंति जयणाए । असईए दव्वस्स उ जहण्णओ पायनिज्जोगो ॥**

अप्राप्ते एव वर्षाकाले अर्धमासमात्रेण सर्वम् उपधिं प्रक्षालयन्ति यतनया "दव्वस्सत्ति" उष्णोदकस्य अल्पत्वे जघन्यतोऽपि पात्रपरिकरः प्रक्षाल्यः, येन गृहस्था भिक्षां प्रयच्छन्तो न जुगुप्सन्ते "इत्यादि" ओघनिर्युक्तिसूत्रवृत्त्योः, किञ्च चीरप्रक्षालनार्थं गृहस्थभाजनेषु कुण्डादिषु निम्बोदकग्रहणं कुर्वन्ति, कदा मेघे प्रवर्ष्य स्थिते सति ग्रहीते च क्षारः प्रक्षेपणीयो येन

यद्वाच्यं तद् विचारः ॥ १०३ ॥

नन्तु कश्चित् साधुः परलोकं प्राप्नुयात् तदा को विधिः कार्यः, इति चेद्, उच्यते, अत्र बृहत्कल्पभाष्यवृत्त्यादिषु उक्तमेव उत्तरम्, तथा च संक्षेपतस्तत्पाठः ॥

"जं वेलं कालगओ निक्कारणे कारणे भवे निरुहो" जग्गणवंधणछेयणएतं तु विहिं तहि कुज्जा ॥ १ ॥

व्याख्या ? दिवा रजन्यां वा यस्यां वेलायां कालगतस्तस्यामेव वेलायां निष्काशनीयः केनचिद् वैयावृत्त्यकरेण भिक्षुणा एकान्ते बहुप्रासुकप्रदेशे परिष्ठापनीयः, एकस्याऽशक्तौ बहुभिरुत्पाटनीयः एवं निष्कारणे, उक्तं कारणे तु निरोधो नाम कियन्तमपि कालं प्रतिक्षाप्यते, तत्र च जागरणं, बन्धनं, छेदनम्, एतम्, एवमादिकं विधिं वक्ष्यमाणनीत्या कुर्यात्, कैः पुनः कारणैः स प्रतिक्षाप्यते इत्याह

"हिमतेणसावयभयापिहितादारा महाणिणादो वा" ठवणा णियगा व तहिं आयरियमहातवस्सी वा ॥ २ ॥

रात्रौ दुरधिसहं हिमं पतति, स्तेनभयात्, श्वापदभयाद् वा, न निर्गन्तुं शक्यते, नगरद्वाराणि, वा तदानीं पिहितानि महानिनादो वा, महाजनज्ञातः स तत्र ग्रामे नगरे वा स्थापना वा, तत्र ग्रामादौ ईदृशी व्यवस्था यथा रात्रौ मृतकं न निष्काशनीयं,

१ निशि कालगते यदि नक्षत्रं न विलोकयति तदा चतुर्गुरव· २ इह पूर्वं दृढतर वंशादिमयं काष्ठं कालगतस्य वहनार्थं गवेषणीयम्, तथा महास्थण्डिलं प्रत्युपेक्षणीयम्, तथा ग्रामादे रासन्ने मध्ये च दूरे च त्रीणि स्थण्डिलानि प्रत्युपेक्षन्ते सार्थोत्तार त्रस संसक्तादिव्याघात· कदाचिद् भवेत् तदर्थम्

यथा कारणे देशादिलक्षणे ऋतुबद्धे काले तृणानि गृहीतानि भवन्ति, तथा ऋतुबद्धे एव काले चिक्खिल्लादिभिः कारणैरादि शब्दात् प्राणसंसक्तिहरितकायादिकारणैश्च फलकानि अपि गृह्यन्ते इत्यादि, इति कारणे वर्षाकालं विनाऽपि पीठफलकादिग्रहणविचारः ॥ १०१ ॥

ननु साधुभिरध्वादिषु वृक्षाद्यधः स्थातुकामैः कस्य आज्ञया तत्र स्थीयते इति चेद्, उच्यते, "अणु जाणहजस्सुग्गहो" इत्यादिवचनेन वृक्षादीन् अपि अनुज्ञाप्य तत्र स्थेयम्, आवश्यकवृहद्वृत्तौ एवमेव उक्तत्वात् तथा च संक्षेपतस्तत्पाठः" साधूनाम् इयं सामाचारी, सर्वत्रैव अध्वादिषु वृक्षाद्यपि अनुज्ञाप्य स्थातव्यं तृतीयव्रतरक्षणार्थम्, एवं भिक्षाऽटनादावपि व्याघातसंभवे कचित् स्थातुकामेन स्वामिनं तद् अभावे तदवग्रहदेवतां वा अनुज्ञाप्य स्थेयम्, इति साधूनाम् अध्वनि वृक्षाद्यनुज्ञापनविचारः ॥१०२॥

ननु यदि संयतीनां वसतौ रात्रौ चौरादिः प्रविशति तर्हि ताभिः किं वाच्यम् "इति चेद्, उच्यते, संयतीनाम् उपाश्रये यदि रात्रौ चौरो व्यवचारी वा कश्चित्प्रविशति तदा द्वारस्थया साध्व्या क इति न वाच्यं" प्रातिवेश्मिकादीनां शङ्कादिदोषोत्पत्तेः, किन्तु "छुछुरितं वाहडिरिति" वा वक्तव्यम्, यद्वा हे अनाथ किं ते नास्ति माता वा पिता वा यदेवम् अस्याम् वेलायां पर्यटसीति, तथा भञ्जन्ति अस्माकम् उपाश्रयं छिन्नाला[1] जरद्गवाः, हे निर्भाग्य नास्ति अत्र त्वद्योग्यश्चारः पलायस्व किमत्र खादिष्यसि "इत्यन्योक्त्या वाच्यम्"इत्यादि बृहत्कल्पवृत्तौ द्वितीयखण्डे, इति संयतीनां वसतौ रात्रौ चौरादिप्रवेशे

[1] दुष्टजातियाः

नन ग्लानस्तत्प्रतिचारकाश्च साधवो अन्यसाधूनां भोजनादिमण्डलीम् प्रविशन्ति नवा "उच्यते" प्रायश्चित्तम् अङ्गीकृत्य तन्निर्वाह्य च पश्चाद् मण्डलीं प्रविशन्ति, प्रायश्चित्तं तु ग्लानस्य दशोपवासाः, प्रतिचारकवर्गस्य तु उपवासद्वयं मतान्तरेण तु द्वयोरपि दशोपवासा बोध्याः यदुक्तं बृहत्कल्पवृत्तौ,.

ग्लाने प्रगुणीभूते सति ग्लानस्य पञ्चकल्याणकं प्रायश्चित्तं प्रतिचारकानां तु एककल्याणकं देयम्,

आदेशान्तरेण वा द्वयोरपि पञ्चकल्याणकं मन्तव्यं, ततो व्यूढे प्रायश्चित्ते द्वावपि ग्लानप्रतिचारकवर्गौ भोजनादिमण्डलीं प्रविशत इत्यादि, इति ग्लानादिसाधूनां प्रायश्चित्तप्रतिपत्त्यादिपूर्वकं भोजनादिमण्डलीप्रवेशविचारः ॥ १०० ॥

ननु वर्षाकालं विना शेषे मासाष्टकरूपे ऋतुबद्धकाले साधवः पौषधिश्रावकाश्च पीठफलकादि गृह्णन्ति नवा, उच्यते, उत्सर्गतस्तु न गृह्णन्ति एव, यदि गृह्णन्ति तर्हि ते अवसन्ना उच्यन्ते, यदुक्तं ज्ञाताऽध्ययने शेलकज्ञाते

"तएणं से सेलए उउबद्धपीढफलगसेवी सज्जा संथारए ओसन्ने जाएत्ति"

तथाऽऽवश्यकनिर्युक्तौ अप्युक्तं च ॥

ओसन्नो वि य दुविहो सव्वे देसे य तत्थ सव्वम्मि । उउबद्धपीढफलगो ठवियगभोई य नायव्वो ॥१॥ त्ति

अपवादतः पुनर्गृह्णन्ति अपि यदुक्तमागमे

जह कारणे तणाई उउबद्धम्मि य हवन्ति गहियाइं। तह फलगाणि वि गिण्हइ चिक्खिल्लाईहिं कज्जेहिं॥१॥

आसाम् अर्थलेशस्तु अयं "नीयाईणंति" आदिशब्दात् पार्श्वस्थावसन्नकुशीलसंसक्ता गृह्यन्ते नित्यवासिप्रभृतीनाम् पञ्चानाम् अपि ग्लानप्रतिचरणे एष गम एष विधिर्मन्तव्यः "तथाहि प्रासुकभक्तादिना प्रतिचरणं कर्त्तव्यं, तथाहि दृढीभूतेन त्वया यदहं ब्रवीमि तत्कर्त्तव्यम् इति निकाचनं, तथा धर्मकथायाः कथनं, तथा स यदि ततः स्थानान्निवर्त्तते ततस्तं ग्लानं गृहीत्वा गमनं करोति२२ पंचन्हवीत्यत्राऽपि शब्दः संभावने देवकुलपरिपालका वेषमात्रधारिणस्तेऽपि ग्लानाः सन्तः परिचरणीयाः "खरण्टत्ति" तेषां खिंसनं करोति यद् उत धर्मे उद्यमं कुरुत "जयणत्ति" यतनया कर्त्तव्यं यथा संयमलाञ्छना न स्यात्, उपदेशं च क्रियाविषयं ददाति, तथा यस्मिन् देशे साधुनिह्नवकभेदो न ज्ञायते तस्मिन् निह्नवकानाम् अपि यतनया परिचरणं करोति, यदि स ग्लान एवं ब्रूयात् एषोऽस्माकं पक्षवर्त्ती नेति ततो गमनं करोति ॥ २३ ॥ यदि स एवं ब्रूयात् मां मान्द्यात् तारय तर्हि यतनया तत्प्रतिचारकरणं, अमुकम् आनय इति तेनोक्ते अकल्प्यमेतद् जनपुरतो न इदृशाः श्रमणा भवन्तीति वक्तव्यम्, जनेन भेदे ज्ञाते सति ततो गमनं कर्त्तव्यम् इत्यादि २४ एवम् उपदेशमालायामपि पार्श्वस्थादेः वैयावृत्त्यादिकं कर्त्तव्यमिति उक्तं बोध्यम्, नवरं तत्र आपद्गतस्य सुश्रावकस्याऽपि कर्त्तव्यमिति उक्तम् अस्ति, तथा च तत्रत्यं गाथाद्वयम्

"हीणस्स वि सुद्धपरूवगस्स नाणाहियस्स कायव्वं" । जणचित्तग्गहणत्थं करेंति लिंगावसेसेऽवि ॥३४९॥
ओसन्नस्स गिहिस्स व जिणपवयणतिव्वभावियमइस्स । कीरइ जं अणवज्जं दढसम्मत्तस्सऽवत्थासु ॥३५०॥
इति साधूनां ग्लानपार्श्वस्थादेरपि प्रतिचरणविचारः ॥ ९९ ॥

ऽवेदो वा भवेत्, तत्र जिनकल्पिकस्य तद्भवे केवलोत्पत्तिप्रतिषेधात् उपशमश्रेण्यां वेदे उपशमिते सति अवेदकत्वम्, तदुक्तम्

उवसमसेढीए खलु वेदे उवसामियम्मि उ अवेदो। नवि खविए तज्जम्मे केवलपडिसेहभावाओ ॥ १ ॥

शेषकाले तु स वेद इति "अत्राहुः केचिदाधुनिकाः; जिनकल्पिकसाधूनां हठगर्भ आचारो, यतस्ते सिंहादिकमपि सम्मुखम् आगच्छन्तं वीक्ष्य तेनैव पथा व्रजन्ति नान्येनेति न तेषां तद्भवे मुक्तिरिति "तदयुक्तं भगवदुक्तनिरपवादानुष्ठानपरत्वात् तेषां भगवतां नहि हठलेशोऽपि आचारगोचरस्तेषां च ईदृशी एव भगवदाज्ञा अस्ति भगवदाज्ञायां तु सर्वथा हठगर्भत्वाभाव एव, अत एव श्रीमदाचाराङ्गेऽपि षष्ठाध्ययने तृतीयोद्देशके जिनकल्पिकस्थविरकल्पिकादयः सर्वेऽपि साधवो जिनाऽऽज्ञानुसारिणः सम्यक्त्वदर्शिन उक्तास्तथाहि" जिनकल्पिकः कश्चिदेककल्पधारी द्वौ त्रीन् वा बिभर्त्ति, स्थविरकल्पिको वा मासार्द्धमासक्षपकस्तथा विकृष्टाऽविकृष्टतपश्चारी प्रत्यहभोजी कूरगड्डुको वा एते सर्वेऽपि तीर्थकृद्वचनानुसारतः परस्पराऽनिन्दया सम्यक्त्वदर्शिनः इति उक्तं च ॥

जो वि दुवत्थ तिवत्थो एगेण अचेलगो व संथरइ। नहु ते हीलंति परं सव्वे वि हु ते जिणाणाए

तथा जिनकल्पिकः प्रतिमाप्रतिपन्नो वा कश्चित्कदाचित् षडपि मासान् आत्मकल्पेन भिक्षां न लभेत, तथाऽपि असौ कूरगड्डुकमपि यथौदनमुण्डस्त्वम् इत्येवं न हीलयति, इत्यादि "जो वि दुवत्थेत्यादि गाथाभावार्थो," बृहत्कल्पे द्वितीयखण्डे तथाहि, योऽपि साधुस्त्रिवस्त्रो द्विवस्त्रो वा संस्तरति त्रिभिर्द्वाभ्यां वा कल्पैरित्यर्थः, स त्रीन् द्वौ वा कल्पान् परिभुङ्क्ते, योऽपि

पसत्थेसु निमित्तेसु पसत्थाणि सयारभे । अप्पसत्थनिमित्तेसु सव्वकज्जाणि वज्जए ॥ ८२ ॥
दिवसाउ तिही बलिओ तिहीउ बलियं तु सुव्वई रिक्खं । नक्खत्ताकरणमाहंसु करणा गहदिणो बली ॥८३॥
गहदिणाओ मुहुत्तो मुहुत्ता सउणो बली सउणाउ बलं वि लग्गं तओ निमित्तं पहाणं तु ॥ ८४ ॥
विलग्गाओ निमित्ताओ निमित्तं बलमुत्तमं । न तं संविज्जए लोए निमित्ता जं बलं भवे ॥ ८५ ॥

इत्यादि इति साधूनामपि विहारादौ चन्द्रबलादिविलोकनविचारः ॥ १०५ ॥

ननु जिनकल्पशब्दे जिनपदेन तीर्थकराः सामान्यकेवलिनो वा गृह्यन्ते, उत अन्ये केचित्, तथा जिनकल्पिकसाधवस्तद्भवे मुक्तिं यान्ति नवा, न यान्ति चेत् केन हेतुना इति चेद्, उच्यते, जिनशब्देन अत्र तीर्थकराः सामान्यकेवलिनो वा न गृह्यन्ते, तेषां हि स्थविरकल्पिकजिनकल्पिकव्यतिरिक्तत्वेन कल्पातीतशब्दाऽभिधेयत्वात्, किन्तु गच्छविनिर्गतसाधुविशेषा गृह्यन्ते, यदुक्तं प्रवचनसारोद्धारवृत्तौ त्रिषष्टितमद्वारे, जिना गच्छनिर्गतसाधुविशेषाः तेषां कल्पः समाचारस्तेन चरन्तीति जिनकल्पिका इत्यादि "तथा जिनकल्पिकास्तद्भवे मुक्तिं न यान्ति, आगमे तेषां केवलोत्पत्तेः प्रतिषेधात्, यदुक्तं बृहत्कल्पवृत्तौ" वेदमङ्गीकृत्य प्रतिपत्तिकाले स्त्रीवर्ज्य एकतरः पुरुषवेदो नपुंसकवेदो वा असंक्लिष्टस्तस्य भवेत्, पूर्वप्रतिपन्नः पुनः सवेदो

१ एकादशादिगुणस्थानचतुष्टयवर्तिनो जीवा न जिनकल्पिका नाऽपि स्थविरकल्पिकाः किन्तु कल्पातीता एवेत्यादिविचारो भगवत्या पञ्चविंशतिशतके षष्ठोद्देशके पञ्चनिर्ग्रन्थाधिकारे ।

चेइअघरुवस्सए वा हायंतीओ थुईउ तो बिंते । सारवणं वसहीए करेइ सव्वं वसइपालो ॥ १ ॥

ततश्चैत्यगृहे उपाश्रये वाऽऽगत्य परिहीयमानाः स्तुतीर्ब्रुवते यावच्च ते अद्याऽपि नागच्छन्ति तावद् वसतिपालो वसतेः प्रमार्जनादि सर्व कृत्यं करोति इत्यादि, अत्र विशेषचूर्णिपाठः पुनरित्थं "तओ आगम्म चेइयघरं गच्छंति चेइयाणि वंदित्ता, संतिनिमित्तं अजियसंति त्थवो परिकड्डिज्जइ तिन्नि थुईओ परिहायंतीओ. कड्डिज्जंति तओ आगंतु अविहिपरिट्ठावणियाए काउस्सग्गो कीरइ त्ति" तथा व्यवहारवशात् चेयं गतिः प्रतिपत्तव्या"

थलकरणे वेमाणिओ जोइसिओ वाणमंतरो समम्मि । गड्डाइ भवणवासी एस गती से समासेण" यदि तस्य शरीरकं स्थले कृतं शिवादिभिरारोपितं तदा वैमानिकः संजातः इति मन्तव्यम्, समभूमिभागे नीतस्य ज्योतिष्केषु व्यन्तरेषु वा उपपातो ज्ञेयः, गर्त्तायां नीतेन भवनवासिषु गत इत्यवगन्तव्यम् "एषा गतिः समासेन तस्याभिहिता इत्यादिस्तृतीयखण्डे" इति परलोकं प्राप्तस्य साधोर्निष्काशनादिविधिविचारः ॥ १०४ ॥

ननु आचार्यादिभिर्विहारादिकर्त्तुकामैः चन्द्रतारावलादिकं निमित्तम् आलोकनीयं नवा, उच्यते, आलोकनीयमेव प्रायः, यदुक्तं बृहत्कल्पवृत्तौ द्वितीयखण्डे "अणुकुलेत्यादि" अनुकूलं चन्द्रवलं तारावलं वा यदा सूरीणां भवति, तदा निर्गमकः प्रस्थानं क्रियते, निर्गताश्चोपाश्रयाद् यावत् सार्थं न प्राप्नुवन्ति तावद् आत्मनैव शकुनं गृह्णन्ति, सार्थं प्राप्तास्तु सार्थसत्केन शकुनेन गच्छन्तीत्यादि, तथा "गणिविज्जापइन्नग सूत्रेऽपि" उक्तं च

निजका वा स्वज्ञातिकास्तत्र सन्ति ते भणन्ति अस्माकम् अनापृच्छया न निष्काशनीयः, आचार्यो वा स तत्र नगरे अतीवलोकविख्यातः, महातपस्वी वा प्रभूतकालपालिताऽनशनो मासादिक्षपको वा, एतैः कारणै रजन्यां प्रतिक्षाप्यते, दिवा पुनरेभिः कारणैः प्रति क्षाप्ययेत् । मृतकाऽऽच्छादनाय शुचिश्वेतवस्त्राणाम् अभावे दिवा न निष्काश्यते, राजादौ वा पुरं प्रविशति पुरान् निर्गच्छति वा, द्वाररोधसंभवात् निशि न निष्काश्यते, इत्यादि "अथ शीर्षद्वारमाह"

'जत्तो दिसाइ गामो तत्तो सीसं तु होइ कायव्वं । उट्ठंतरक्खणट्ठा अमंगलं लोगगरहा य'

यस्यां दिशि ग्रामस्ततः शीर्षं शवस्य प्रतिश्रयान् नीयमानस्य परिष्ठाप्यमानस्य च कर्त्तव्यं किमर्थम् इत्याह, उत्तिष्ठतो रक्षणार्थं, यदि नाम कथंचिद् उत्तिष्ठति तथापि प्रतिश्रयाभिमुखं न आगच्छतीति भावः" अपि च यस्यां दिशि ग्रामस्तदभिमुखं पादयोः क्रियमाणयोरमङ्गलं भवति लोकश्च गर्हां कुर्यात्, अहो अमी श्रमणका एतदपि न जानन्ति यद् ग्रामाभिमुखं शवं न क्रियते इति, तथा तस्मिन् परिष्ठाप्यमाने चिह्नार्थं यथा जातम् उपकरणम् पार्श्वे स्थापनीयं, तद् यथा रजोहरणं मुखपोत्तिका चोलपट्टकः, यदि एतत् न स्थापयन्ति ततश्चतुर्गुरु प्रायश्चित्तम् आज्ञादयश्च दोषाः चिह्नस्य अकरणे भवन्ति, स च कालगतो मिथ्यात्वं गच्छेत्, यतोऽसौ देवलोकगतः प्रयुक्तावधिरुपकरणमदृष्ट्वा अनेन गृहिलिङ्गेन वाऽहं देवो जातः, इति मिथ्यात्वं गच्छेत्, राजा वा जनपरंपरया तं ज्ञात्वा कश्चित् मनुष्योऽमीभिरपद्रावित इति बुद्ध्या कुपितः प्रत्यासन्नवर्त्तिनां द्वित्रादीनां ग्रामाणां वन्धं कुर्यादित्यादि अथ कायोत्सर्गद्वारमाह—

ननु कालातिक्रान्तम् अध्वातिक्रान्तं क्षेत्रातिक्रान्तं प्रमाणातिक्रान्तं च अशनादि साधूनां न कल्पते, परं कालातिक्रान्तादिपदानां कोऽर्थः, उच्यते, प्रहरत्रयादूर्ध्वं ध्रियमाणं कालातिक्रान्तम्, अर्धयोजनातिरेकाद् आनीतं नीतं वा अध्वातिक्रान्तं, तच्च साधूनाम् अपरिभोग्यं विवेकाऽर्हम् इत्यर्थः इति जीतकल्पवृत्तौ, तथा क्षेत्रं सूर्यसम्बन्धितापक्षेत्रं दिनमित्यर्थः, तदतिक्रान्तं यत् तत् क्षेत्रातिक्रान्तम्, अनुद्गते एव सूर्ये अशनादिकं गृहीत्वा सूर्ये उद्गते आहारयन्ति तत् क्षेत्रातिक्रान्तमिति भावः, तथा द्वात्रिंशत् कवललक्षणप्रमाणम् अतिक्रान्तम् प्रमाणातिक्रान्तमुच्यते, यदुक्तं भगवत्यङ्गे सप्तमशतके प्रथमोद्देशे "जो णं निग्गंथो वा निग्गंथी वा फासुएसणिज्जं असणं पाणं खाइमं साइमं अणुग्गए सूरिए पडिग्गहित्ता उग्गए सूरिए आहारं आहारेइ एस णं गोयमा खित्तातिक्कंते पाणभोयणे" इत्यादिः सर्वोऽपि पाठस्तत एव अवगन्तव्यः, इति कालातिक्रान्तादिपदचतुष्टयविचारः ॥ ११० ॥

ननु प्रतिक्रमणसूत्रे अतिक्रमव्यतिक्रमाऽतिचाराऽनाचारा उक्तास्तेषां किं स्वरूपम्, इति चेद्, उच्यते, आवश्यकबृहद्वृत्त्युक्तम् एव उत्तरम् अत्र जानीहि "तथाच तत्पाठः" "अतिक्रमादीनां स्वरूपम् उच्यते"

आहाकम्मणिमंतणे पडिसुणमाणे अइक्कमो होइ । पदभेदादि वइक्कमो गहिते तइओ तरो गिलिते ॥ १ ॥

आधाकर्मनिमन्त्रणे ग्रहीष्ये, एवं प्रतिशृण्वति सति साधौ अतिक्रमः साधुक्रियोल्लङ्घनरूपो भवति, यत एवंभूतं वचः श्रोतुमपि न कल्पते, किं पुनः प्रतिपत्तुं, ततः प्रभृतिभाजनोद्ग्राहणादौ तावद् अतिक्रमः यावद् उपयोगकरणं, ततः कृते उपयोगे

उपेक्षासंयमो द्वादशः, तत्र उपेक्षा द्विविधा संयतव्यापारोपेक्षा गृहस्थव्यापारोपेक्षा च तत्र साधुं विषीदन्तं दृष्ट्वा संयमव्यापारेषु नोदयतः प्रथमा, गृहस्थम् अधिकरणव्यापारेषु प्रवृत्तं दृष्ट्वा अनोदयतो द्वितीया, ईक्ष दर्शने उपसामीप्येन ईक्षा उपेक्षा १२ अतिरिक्तं वस्त्रभक्तपानकादिकं विधिना परिष्ठापयतः परित्यजतोऽपि संयमः १३ "सागारिय पमज्जणसंजमो" सागारिकाणाम् अग्रतो यत् पादाऽप्रमार्जनम् असौ एव संयमः" "सेसे पमज्जणयत्ति" शेषे सागारिकाद्यभावे प्रमार्जनेनैव संयमः १४ एवम् एते चतुर्दश मनोवाक्कायसंयमाश्च त्रिविधाः, एवं सप्तदशेति १७ समवायाङ्गवृत्तौ पुनरयमर्थो विशेषः, तथाहि "अजीवकायाऽसंयमो विकटसुवर्णबहुमूल्यवस्त्रपात्रपुस्तकादिग्रहणं, तदग्रहणं तु अजीवसंयम इत्यर्थः, उपेक्षा असंयमो असंयमयोगेषु व्यापारणं संयमयोगेषु अव्यापारणं, तद्विपरीतस्तु उपेक्षासंयमस्तथा प्रमार्जनाऽसंयमः पात्रादेरप्रमार्जनया अविधिप्रमार्जनया वेति, तद्विपरीतस्तु प्रमार्जनासंयम इत्यर्थः" इत्यादिः "प्रागुक्तपाठे यदुक्तम् अग्राह्यं" दूसपणगमित्यादि तस्यायमर्थः, तूलकादिदूष्यपञ्चकम् अप्रतिलेखितम् उच्यते सर्वथा अन्तश्चक्षुरविषयमित्यर्थः, "कुञ्चिकादिकं तु दुष्प्रतिलेखितदूष्यपञ्चकं, तथाहि कुञ्चिका १ पूरिका २ आवार ३ दाढिकालि ४ जयनानि ५, तत्र रूतपूरितपटादिः कुञ्चिका इत्युच्यते लोके माणिकी इति प्रसिद्धा १ पूरिका स्थूलशणगुणमयपटात्मिका २ प्रावारो बृहत्कम्बलः ३ दाढिकालिर्यमलिततन्तुद्वयव्यूतापटी एवं विरलिका नाम द्विसूत्रपट्यपि, और्णिकी सौत्रिकी वा ४, जयनानि जीन इति प्रसिद्धानि ५ इत्यादि बृहत्कल्पे द्वितीयखण्डे, एवं शुषिरतृणादिकम् सलोमचर्मादिकं चापि अग्राह्यम् इति सप्तदशविधसंयमाऽसंयमादिविचारः ॥ १०९ ॥

तथा च संक्षेपतस्तत्पाठः "नो कप्पईत्यादिः" आर्याया ग्रामाद् बहिरूर्ध्वमुखौ बाहू कृत्वा एकं पादम् ऊर्ध्वमाकुञ्च्य आतापनाभूमौ आतापयितुं न कल्पते, किन्तु उपाश्रयमध्ये संघाटीप्रतिबद्धायाः प्रलम्बितबाहायाः समतलपादिकायाः स्थित्वा आतापयितुं कल्पते, यदवाङ्मुखं निपत्य आतापना क्रियते सा उत्कृष्टोत्कृष्टा इत्यादिः, इति साध्वीनां ग्रामाद् बहिरातापनाकरणनिषेधादिविचारः ॥ १०८ ॥

ननु पञ्चाऽऽश्रवाद् विरमणमित्यादिकः सप्तदशभेदसंयमस्तु प्रसिद्ध एव, परं प्रकारान्तरेणापि सप्तदशभेदः संयमोऽसंयमश्च शास्त्रे श्रूयते स कथमिति चेद्, 'उच्यते' पृथिव्यप्तेजोवायुवनस्पतिद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियेषु नवविधजीवेषु यतनया प्रवृत्तिर्नवविधः संयमः ॥ ९ ॥ तथा अजीवसंयमः ॥ १० ॥ प्रेक्षासंयमः ॥ ११ ॥ उपेक्षासंयमः ॥ १२ ॥ परिष्ठापनासंयमः १३ प्रमार्जनासंयमः १४ तथा मनोवाक्कायानां कुशलकर्मणि व्यापारणम् अकुशलान् निवर्त्तनमिति त्रिविधो मनोवाक्कायसंयमश्चेति १७ सप्तदशविधः संयमः, एतद् विपरीतस्तु असंयमः, अजीवसंयमादीनां पञ्चानाम् अर्थस्तु ओघनिर्युक्त्यादिभ्यो ज्ञेयस्तत्पाठस्तु अयम् "संयमः सप्तदशप्रकारः" "पुढवीत्यादि"

पुढवि दग अगणि मारुअ वणस्सई बेइंदिय तेइंदिय चउरिंदिय पंचेंदिया "तथा अजीवत्ति" अजीवेषु पनकसंसक्तपुस्तकादिषु गृहीतेषु असंयमो भवति येन तद् न ग्राह्यम्, आदिशब्दात् "दूसपणगं तणपणगं चम्मपणगं च" एतेषु परिगृहीतेषु असंयमः, परिहृतेषु संयमः, १० प्रेक्षासंयमः पूर्वं चक्षुषा भूमिं निरीक्ष्य ततः कायोत्सर्गशयनादिकरणम् ११

एकेन कल्पेन संस्तरति स एकमेव परिभुंक्ते ॥ यो वा जिनकल्पिकादिरचेलः संस्तरति स एकमपि कल्पं मा गृह्णातु, परं नहि ते स्वल्पतरवस्त्रा अचेलका वा परम् अन्यम् अधिकतरवस्त्रं खिंसन्ति कुत इति चेद् उच्यते, सर्वेणाऽपि स्थविरकल्पिकेन त्रयः कल्पा नियमात् ग्रहीतव्याः; यदि एकेनैव शीतपरीषहं सोढुं शक्नोति, तथाऽपि त्रयाणां ग्रहणमियं भागवती आज्ञाऽस्ति इत्यादि "अन्ये तु आचक्षते जिनकल्पिकानाम् उत्कृष्टतरसदनुष्ठानसमाचरणात् अत्युत्कृष्टपुण्यसंचयः संपद्यते तच्च च पुण्यं न विशिष्ट-स्वर्गादिसुखभुक्तिमन्तरेण निष्ठामुपयाति इत्यतो न तद्भवे तेषां मुक्तिरिति" अत्र तत्त्वं तु तत्त्ववेदिवेद्यम् इति जिनकल्पिकानां नामार्थतद्भवमुक्तिगमननिषेधादिविचारः ॥ १०६ ॥

ननु अन्निकासुताचार्य्यैः स्वान्ते वासिन्या आर्यायाः केवलज्ञानोत्पत्तौ ज्ञातायां तद्वन्दनं कृतं न वा 'उच्यते' न कृतमिति ज्ञायते

"जाणामि कहं अतिसएण केण केवलेण खामिओ केवलि आसाइओ त्ति"

आवश्यकबृहद्वृत्तौ एतावत एव पाठस्य सद्भावात् इति छद्मस्थेनाऽपि गुरुणा केवलज्ञानवती अपि साध्वी न वन्द्येति विचारः ॥ १०७ ॥

ननु यथा केचित् साधवो ग्रामाद् बहिःप्रलम्बितबाहव आतापनां कुर्वन्ति, केचित् पुनरूर्ध्वं बाहू कृत्वा एकम् पादमूर्ध्वम् आकुञ्च्य आतापनां कुर्वन्ति, एवं साध्व्योऽपि कुर्वन्ति नवा, उच्यते, न कुर्वन्ति एव, किन्तु बृहत्कल्पोक्तविधिना कुर्वन्ति,

ननु परविवाहवत् स्वापत्यविवाहनेऽपि समान एव अयं दोषः, सत्यम् एतत् परं यदि स्वकन्यादीनां विवाहो न कार्यते तदा स्वच्छन्दचारित्वं भवेत्, ततः शासनोपघातः स्यात् विहिते तु विवाहे पत्यादिनियन्त्रितत्वेन न तथा भवतीति "यस्तु चिन्तकान्तरसद्भावे सति द्रष्टव्य यादवशिरोमणेः कृष्णस्य चेटकराजस्य च निजापत्येषु अपि विवाहनियमः श्रूयते स इत्यादि" एवं योगशास्त्रवृत्त्यादौ अपि बोध्यम् । इति चतुर्थाणुव्रतधारिश्राद्धस्य अतिचारविशेषविचारः, तदन्तर्गत एव भद्रक-मिथ्यादृष्टेः सम्यक्त्वं विनाऽपि व्रतदानविचारः ॥ ११२ ॥

ननु साधुश्राद्धादिभिर्यत् चतुर्थषष्ठाष्टमादितपः क्रियते तस्य आद्यन्तदिनयोरेकाशनकप्रत्याख्यानकरणनियमो विद्यते न वा, उच्यते, "नायं नियम इति ज्ञायते, चतुर्थं भक्तं यावद् यत्र भक्तं त्यज्यते तत् चतुर्थमित्यादि तच्चतुर्थशास्त्रोक्तत्वात्" कथं न नियम इति चेच्छृणु, व्युत्पत्तिमात्रमेवैतत्, गच्छतीति गौरित्यादिवत्, तात्पर्य तु चतुर्थमिति उपवासस्य संज्ञा इत्यादि", यदुक्तं श्रीमद्भगवत्यङ्गवृत्तौ द्वितीयशते चतुर्थोद्देशके "चउत्थं चउत्थेणंति" चतुर्थं भक्तं यावद् भक्तं त्यज्यते यत्र तत् चतुर्थ-मियं चोपवासस्य संज्ञा, एवं षष्ठादिकमुपवासद्वयादेरिति "अन्तकृद्दशावृत्तौ अप्युक्तं रत्नावलीतपोधिकारे, चतुर्थमेकेन उपवासेन षष्ठं द्वाभ्याम्, अष्टमं त्रिभिरिति" किञ्च यदि चतुर्थादेराद्यन्तदिनयोरेकाशनकनियमो भवेत् तर्हि

"वासावासं पज्जोसवियाणं छट्ठभत्तियस्स कप्पंति दोगोअरकाला"

स्त्रीपुंनपुंसकसेवनेच्छा हस्तकर्मादीच्छा वा तेन तस्मिन् वा क्रीडा रमणम् दन्तनखकदर्थनादिप्रकारैः प्रबलरागोत्पत्तिकारणैः क्रीडनमित्यर्थः, यद्वा अङ्गं देहावयवो मैथुनाऽपेक्षया योनिर्मेहनं वा तद् व्यतिरिक्तानि अनङ्गानि कुचकक्षोरूवदनादीनि तेषु क्रीडा" इह च श्रावकोऽत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयाऽसहिष्णुतया तत्कर्तुं न शक्नोति तदा यापना-मात्रार्थं स्वदारसंतोषादि प्रतिपद्यते, मैथुनमात्रेणैव च यापनायां संभवत्यां कामतीव्राभिलापाऽनङ्गक्रीडे अर्थतः प्रतिषिद्धे तत् सेवने च न कश्चिद् गुणः, प्रत्युत राजयक्ष्मादयो दोषा एव भवन्ति "एवं प्रतिषिद्धाचरणाद् भङ्गो निजनियमाऽबाधनाच् च अभङ्ग इति, एतौ अतिचारौ" अन्ये तु अन्यथा अतिचारद्वयमपि भावयन्ति, स हि स्वदारसंतोषी निधुवनमेव मया प्रत्याख्यातमिति, स्वकल्पनया वेश्यादौ तत् परिहरति न आलिङ्गनादि परदारवर्जिनोऽपि परदारेषु निधुवनं परिहरन्ति न आलिङ्गनादीनि कथंचिद् व्रतसापेक्षत्वाद् अतिचाराविति "तथा अपरेषाम्" अन्येषां स्वस्वापत्यव्यतिरिक्तानां विवाहकरणं कन्याफललिप्सया स्नेहसंबन्धादिना वा परिणयनविधानमिदं च स्वकलत्रसंतोषवता स्वकलत्रत्वात् परदारवर्जकेन तु स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्यं, न च कारणीयमिति, यदा प्रतिपन्नं व्रतं भवति तदा परविवाहकरणं मैथुनकारणम्, अर्थतः प्रतिषिद्धमेव भवति, मैथुनव्रतकारी च मन्यते मया विवाह एव अयं विधीयते, न तु मैथुनं कार्यते इति, व्रतसापेक्षत्वात् अतिचारः" कन्याफललिप्सा च सम्यक्दृष्टेरव्युत्पन्नाऽवस्थायां संभवति, मिथ्यादृष्टेश्च भद्रकावस्थायाम् अनुग्रहार्थं व्रतदाने सा संभवति

**सदारसंतोसस्स इमे पंच अइयारा जाणिअव्वा न समाअरियव्वा त्ति ॥ १ ॥**

अन्ये तु आहुरित्वरपरिगृहीता स्वदारसंतोषिणोऽतिचारः प्राग्वदेव अपरिग्रहाऽऽसेवनं तु परदारवर्जिनो अतिचारो यतोऽपरिग्रहा वेश्या तां च गृहीताऽन्यसत्कभाटिकां यदि अभिगच्छति तदा परदारगमनदोषसंभवात्, कथंचित् परदारत्वाच्च, भङ्गत्वेन वेश्यात्वाच्चाऽभङ्गत्वेन भङ्गाऽभङ्गरूपोऽतिचारः इति द्वितीयः २ अपरे पुनरन्यथा प्राहुः

**परदारवज्जिणो पंच हुंति तिन्नि उ सदारसंतुट्ठे। इत्थीइ तिन्नि पंच व भंगविगप्पेहिं अइयारा ॥ १ ॥**

इयम् अत्र भावना इत्वरकालं या परेण भाट्यादिना गृहीता वेश्या तां गच्छतः परदारवर्जिनो भङ्गः कथंचित् परदारत्वात् तस्याः, लोके तु परदारत्वाऽरूढेर्न भङ्गः, इति भङ्गाभङ्गरूपोऽतिचारः तथा अपरिगृहीतायाम् अनाथकुलाङ्गनायां यद् गमनं परदारवर्जिनः सोऽपि अतिचारः, तत्कल्पनया तु परस्य भर्तुरभावेन अपरदारत्वाद् अभङ्गः, लोके च परदारतया रूढेः भङ्गः इति पूर्ववद् अतिचारः, शेषास्तु त्रयोऽतिचारा द्वयोरपि भवेयुः स्त्रियास्तु स्वपुरुषसंतोषपरपुरुषवर्जनयोर्न भेदः, स्वपुरुषव्यतिरेकेण अन्येषां परपुरुषत्वात् , परविवाहनादयस्तु त्रयः स्वदारसंतोषिण इव स्वपुरुषविषयाः स्युरिति पञ्च वा, कथं आद्यास्तावद् यदा स्वकीयपतिवारकदिने सपत्न्या गृहीतो भवति, तदा सपत्नीवारकं विलुप्य परिभुञ्जानाया अतिचारः? द्वितीयस्तु अतिक्रमादिना परपुरुषमभिसरन्त्या अतिचारः, ब्रह्मचारिण्या वा स्वपतिम् अतिक्रमादिना अभिसरन्त्या अतिचारः, शेषास्त्रयः स्त्रियाः पूर्ववदिति। तथा तीव्रः कामाभिलाषः कामभोगेषु अतृप्तता तृतीयोऽतिचारः "तथा अनङ्गः कामः स्त्रियाः पुंसः क्लीबस्य वा

गच्छतः पदभेदादिव्यतिक्रमस्तावद् यावद् उत्क्षिप्तं भोजनं दात्रेति, "ततो गृहीते सति तस्मिन् तृतीयो अतिचार इत्यर्थः" तावद् यावद् वसतिं गत्वा ईर्यापथप्रतिक्रमणाद्युत्तरकालं लम्बनोत्क्षेपः, तत उत्तरकालम् अनाचारः, तथा चाह "तरोगिलितेत्ति" प्रक्षिप्ते सति कवले अनाचार इति गाथार्थः "इदं च आधाकर्मोदाहरणेन तेषां स्वरूपमुक्तमेवम् अन्यत्राऽपि ज्ञेयम्" इति अतिक्रमादिपदचतुष्टयस्वरूपविचारः ॥ १११ ॥

ननु स्थूलब्रह्मव्रतधारी श्रावको द्विधा स्वदारसंतोषी परदारवर्जकश्च, तयोरित्वरपरिग्रहगमनादयः पञ्चातिचारा उक्तास्ते च उभयोस्तुल्या एव, किंवा कस्यचित् न्यूना अपीति चेद्, उच्यते, प्रवचनसारोद्धारवृहद्वृत्तौ, अत्र मतत्रयं लिखितमस्ति "तथाहि भाटिप्रदानादिना इत्वरकालस्वीकारेण स्वकलत्रीकृत्य वेश्यां सेवमानस्य स्वमतिकल्पनया स्वदारत्वेन व्रतसापेक्षचित्तत्वात् न भङ्गो अल्पकालपरिग्रहात् च, वस्तुतोऽन्यकलत्रत्वात् भङ्गः, इति भङ्गाऽभङ्गरूपोऽतिचारः प्रथमः, तथा अपरिगृहीता अगृहीताऽन्यसत्का भाटिर्वेश्या प्रोषितभर्तृका स्वैरिणी कुलाङ्गना वा अनाथा तां स्त्रियं सेवमानस्य द्वितीयोऽतिचारः" अयं च अनाभोगादिना अतिक्रमादिना वा अतिचारः, अतिक्रमाद्यर्थस्तु प्राग् उक्त एव, मैथुनम् आश्रित्य अत्रापि आयोज्यस्ततोऽत्र अयं परमार्थो, यावत् स्वाङ्गेन तदङ्गसंस्पर्शस्तावद् अतिचारः "तदवाच्यप्रदेशे स्वाऽवाच्यप्रक्षेपे तु अनाचार एवेति" एतौ च द्वावपि अतिचारौ स्वदारसंतोषिण एव, नतु परदारवर्जकस्य, इत्वरपरिग्रहाया वेश्यात्वेन अपरिग्रहायास्तु अनाथतया एव परदारत्वाऽभावात्, शेषास्तु अतिचारा द्वयोरपि, इति हरिभद्रसूरिमतम्, एतदेव च सूत्रानुपाति "यदाह"

केरिसयस्स साहुस्स पारिट्ठावणियं दायव्वं न दायव्वं वा, आयरिओ भणइ आयंबिलमणायंबिले गाहा व्याख्या-पारिट्ठावणियभुंजणे जोग्गा साधू दुविहा आयंबिलग्गा अणायंबिलग्गा, अणायंबिलग्गा आयंबिलविरहिया, एक्कासणेक्कट्ठाणचउत्थछट्ठट्ठमनिव्विगइयपज्जवसाणा दसमभत्तियादीणं मंडलीए उव्वरियं पारिट्ठावणियं न कप्पति दाउं, तेसिं पेज्जं उण्हयं वा दिज्जइ अविय तेसिं देवया वि होज्जा "इत्यादिः" इति पारिट्ठावणियागारेणम् इत्याकारकस्यार्थादिविचारः ॥ ११७ ॥

ननु साधुश्राद्धादिभिः कियत् साक्षिकं प्रत्याख्यानं कर्तव्यमिति चेद्, उच्यते, आत्मदेवगुरुलक्षणत्रिसाक्षिकं तत्कार्यं, पूर्वम् आत्मसाक्षिकं तत् विधाय पश्चात् क्रमेण देवसाक्षिकं गुरुसाक्षिकं च विधेयमित्यर्थः ॥ यदुक्तं योगशास्त्रवृत्तौ तृतीयप्रकाशे

"ततो गुरूणाम् अभ्यर्णे प्रतिपत्तिपुरस्सरम्।" विदधीत विशुद्धात्मा प्रत्याख्यानप्रकाशनम् ( २४ )

ततोऽनन्तरं गुरूणां धर्माचार्याणां देववन्दनार्थम् आगतानां स्नात्रादिदर्शनधर्मकथाद्यर्थं तत्रैव स्थितानाम् अभ्यर्णे उचितप्रदेशे उचितत्वं च अर्धचतुर्थहस्तप्रमाणात् क्षेत्रात् बहिरवस्थानं प्रतिपत्तिर्व्याख्यास्यमाना वन्दनकादि वा तत्पुरस्सरं तत्पूर्वकं विदधीत कुर्यात् विशुद्धात्मा निर्मलचित्तो न तु दम्भादियुक्तः, प्रत्याख्यानस्य देवसमीपे कृतस्य प्रकाशनं गुरोः पुरतः प्रकटनं, त्रिविधं हि प्रत्याख्यानविधानं आत्मसाक्षिकं देवसाक्षिकं गुरुसाक्षिकं च ( १२४ ) इति त्रिसाक्षिकप्रत्याख्यानकरणविचारः ॥ ११८ ॥

त्सर्गे उच्छ्वासादियतनाविधिविचारः ॥ ११६ ॥

ननु एकाशनादिप्रत्याख्यानेषु "पारिट्ठावणियागारेणम् इत्याकारस्य कोऽर्थः" तथा पारिष्ठापनिकं कस्मै देयमिति चेद्, उच्यते, परिष्ठापनं सर्वथा त्यजनं प्रत्याख्यातविकृत्यादेस्तत् प्रयोजनम् अस्येति पारिष्ठापनिकं तदेव आकारोऽपवादविशेषः पारिष्ठापनिकाऽऽकारः, तस्माद् अन्यत्र तत्र हि त्यज्यमाने बहुदोषसंभवात् आश्रीयमाणे चागमिकन्यायेन गुणसंभवात् गुर्वाज्ञया पुनर्भुञ्जानस्याऽपि न भङ्ग इत्यर्थः "प्रवचनसारोद्धारवृत्त्यादौ" अथ पारिष्ठापनिकं यस्मै देयं स उच्यते, एक आचाम्लवान् अपरश्चतुर्थभक्तिकस्तदा चतुर्थभक्तिकस्य देयं, सोऽपि द्विधा बालो वृद्धश्च, बालस्य देयं, सोऽपि सहोऽसहश्च असहस्य देयं, सोऽपि हिण्डकोऽहिण्डकश्च हिण्डकस्य देयं, सोऽपि प्राघूर्णको वास्तव्यश्च प्राघूर्णकस्य देयं, तद्भावे वास्तव्यस्य, एवं चतुर्भिः पदैः षोडश भङ्गाः, ( १६ ) चरमभङ्गस्तु एवं वृद्धसहाऽहिण्डकवास्तव्यस्य तत्र आद्यभङ्गगतस्य देयं तदभावे द्वितीयभङ्गगतस्य एवं यावत् चरमभङ्गगतस्य देयम्, एवम् आचम्लवत् षष्ठभक्तिकयोः षोडशभङ्गाः ( १६ ) "आचम्लवदष्टमवतोरपि षोडशः ( १६ ) आचाम्लनिर्विकृतिकयोरपि षोडशः, ( १६ ) नवरम् आचाम्लवतो देयं सर्वत्र गुरुप्रत्याख्यानवतो देयं[1] दशमभक्तिकादीनां तु न देयम्, अयं च आकारः साधोरेव श्राद्धस्तु अखण्डसूत्रत्वादेव उच्चरति" इति आवश्यकलघुवृत्तौ बृहद्वृत्तिपाठस्तु अयम् "अत्र शिष्यः पृच्छति"

१ उष्णं पानीयम् चेद् वर्त्तते तर्हि तत् तेभ्योऽपि देयं तेषा शरीर प्रायो देवाधिष्ठितमपि भवेत्

इत्यादिभणनं स द्वितीयो गमः (२) तथा पञ्चमे आवश्यके यत् "करेमिभंते" इत्याद्युक्तिपूर्वं "इच्छामि ठामिउं काउस्सग्गं" इत्यादि पठनं स तृतीयो गमः ३ इति" तथा दैवसिकस्याऽऽदौ गणना तु दिवसस्य प्रधानत्वादिहेतुना बोध्या "यदुक्तम् आवश्यकनिर्युक्तिबृहद्वृत्त्योः

"देवसियराइयपक्खियचाउम्मासे तहेव वरिसे य इक्केके तिन्नि गमा नायव्वा पंचसुएतेसु"

दिवसेन निर्वृत्तं दैवसिकं तस्मिन् नेवं रात्रिके पाक्षिके चातुर्मासिके वार्षिके च एकैकस्मिन् प्रतिक्रमणे दैवसिकादौ त्रयो गमा ज्ञातव्याः, पञ्चसु एतेषु दैवसिकादिषु कथं त्रयो गमाः, सामायिकं कृत्वा कायोत्सर्गकरणं, सामायिकमेव कृत्वा प्रतिक्रमणकरणं, सामायिकमेव कृत्वा पुनः कायोत्सर्गकरणम् इह च यस्माद् दिवसादि तीर्थं दिवसः प्रधानं च तस्माद् दैवसिकम् आदाविति गाथार्थः, इति प्रतिक्रमणेषु गमत्रयादिविचारः ॥ ११५ ॥

ननु कायोत्सर्गे उच्छ्वासादिकं केन विधिना कार्यमिति चेद्, उच्यते "सम्यग् यतनया कार्यं यतना च आवश्यकबृहद्वृत्त्याद्युक्ता ज्ञेया, तथा च संक्षेपतस्तत्पाठः" ऊसासं न णिरुंभइ इत्यादिः कायोत्सर्गे उच्छ्वासं न निरुणद्धि, किन्तु सूक्ष्मोच्छ्वासमेव यतनया मुञ्चति नोल्वणं, मा भूत् सत्त्वविघात इति, एवं कासक्षुतादीनि अपि कायोत्सर्गे अग्रतो हस्तदानेन यतनया क्रियन्ते न निरुध्यन्ते, वातनिसर्गे च शब्दस्य यतना क्रियते न निसृष्टं मुच्यते इत्यादिः" इह जीतकल्पवृत्तौ पुनरयं विशेषः, अधो वातनिर्गमे च करेण एकपुताकर्षणं कार्यं येन महान् कुत्सितः शब्दो न भवति, अन्यथा तु अविधिरिति "इति कायो-

इत्यादिः कल्पसूत्रोक्तपाठो विरुध्येत तत्र षष्ठभक्तपारणके वारद्वयम् आहारनिमित्तगमनस्योक्तत्वाद् इत्यलं विस्तरेण[2] ॥ इति चतुर्थभक्तादिकमुपवासादेः संज्ञा न तु आद्यन्तैकाशनकनियम इति विचारः ॥ ११३ ॥

ननु श्राद्धेन रात्रिभोजनत्यागस्तु भोगोपभोगपरिमाणाख्ये सप्तमव्रते एव अभक्ष्यवर्जनावसरे कृत आसीत् ततः श्राद्धस्य एकादशप्रतिमासु पञ्चम्याम् प्रतिमायां कथं तत् त्याग उक्त इति चेद्, उच्यते "प्रायः पूर्वमशनखादिमयोः त्यागः कृत आसीत् पानस्वादिमयोस्तु परतन्त्रतया मुत्कलत्वम् अभूत् पञ्चम्यां प्रतिमायां तु तयोरपि त्यागः कृतः" इति श्राद्धदिनकृत्यादौ उक्तत्वात् न कश्चिद् दोषः, इति श्राद्धस्य सर्वथा रात्रिभोजनत्यागः प्रायः पञ्चम्यां प्रतिमायामितिविचारः ॥ ११४ ॥

ननु दैवसिकादिप्रतिक्रमणपञ्चके कियन्तो गमा अर्थात् सदृशपाठाः सन्ति तथा आवश्यकनिर्युक्त्यादौ सर्वेषां प्रतिक्रमणानाम् आदौ दैवसिकप्रतिक्रमणगणना किमर्थं कृता इति चेद्, उच्यते, त्रयो गमाः सन्ति "तथाहि देवान् अभिवन्द्य चतुर्भिः क्षमाश्रमणैराचार्यादिगुरूंश्च वन्दित्वा" सव्वस्सवि "इत्यादि उक्त्वा यत्" करेमि भंते "इत्याद्युक्तिपूर्वं" इच्छामि ठामिउं काउस्सग्गं "इत्यादिभणनं स प्रथमो गमः ? तथा चतुर्थे आवश्यके" करेमि भंते "इत्याद्युक्तिपूर्वं यद्" इच्छामिपडिकमिउं

---

१ श्रीस्थानाङ्गवृत्तावपि त्रिस्थानकाधिकारे यथा एकं पूर्वदिने द्वे उपवासदिने चतुर्थं पारणकदिने भक्तं भोजनं परिहरतो यत्र तपसि तच् चतुर्थभक्तं तद् यस्यास्ति स चतुर्थभक्तिकस्तस्य, एवमन्यत्रापि शब्दव्युत्पत्तिमात्रमेतत् प्रवृत्तिस्तु चतुर्थभक्तादिशब्दानाम् एकाद्युपवासादिषु इत्यर्थः. २ अन्यच्च यस्य यदा चतुर्थभक्तनियमोऽस्ति तस्यापि द्वयोश्चतुर्थयोरन्तराले एकम् एव एकाशनकमागतम् एकस्य तु न्यूनत्वमेव स्थितम् इत्यादि ॥

अग्रेहस्तत्रिभागायामा दशिकाः संवध्यन्ते एषा च निषद्या दण्डिका कलिता अत्र रजोहरणशब्देन गृह्यते, उक्तं च "एगनिसज्जं च रयहरणं" इति, द्वितीया तु एनामेव निषद्यां तिर्यग् वहुभिर्वेष्टकैरावेष्टयन्ति किंचिदधिकहस्तप्रमाणमात्रपृथुला वस्त्रमयी निषद्या सा अभ्यन्तरनिषद्या, इयं च क्षौमिकनिषद्याग्रहणेनाऽत्र गृह्यते, तृतीया तु तस्या एव अभ्यन्तरनिषद्यायास्तिर्यग् वेष्टकान् बहून् कुर्वती चतुरङ्गुलाधिकैकहस्तमाना चतुरस्रा कम्वलमयी भवति, सा च उपवेशनोपकारित्वाद् अधुना पादप्रोञ्छनकमिति रूढा इयं बाह्या निषद्या इत्यभिधीयते, अस्या-श्चेह औणिकनिषद्याग्रहणेन ग्रहणमिति प्रवचनसारोद्धारवृत्तौ "इत्थमेव पिण्डनिर्युक्ति-पाठोऽपि वोध्यः प्रायः समानरूपत्वात् न लिखितः" इदमत्रतात्पर्य्यम् एतच्छास्त्रद्वयेऽपि वृत्तिकृद्भ्यां संप्रतिदशिकाभिः सह या च दण्डिका क्रियते इत्युक्तत्वात् तत्पूर्वजैरपि एषा आचरणाङ्गीकृता इति ज्ञायते, तथाहि नवाङ्गीवृत्तिकारकश्रीमदभयदेवा-चार्यसन्तानीयखरतरगच्छीया वृहद्गच्छीयाश्च मुनयोऽधुनाऽपि रजोहरणे सदशिकामेव दण्डिकां विभ्राणा दृश्यन्ते ततश्च "आय-रणाविहुआणा" इति वचनाद् युक्तमेव दण्डिकायां दशावन्धनमिति ज्ञायते,,

ननु यदि एवं तर्हि तपागच्छीयास्तु वृहद्गच्छप्रभवा एव कथं ते सदशिकां दण्डिकां न कुर्वन्ति, इति चेद् अत्रार्थे ते एव प्रष्टव्या वयं तु तदभिप्रायं न विद्मः "इह रजोहरणप्रमाणं चौघनिर्युक्तिसूत्रोक्तमिदम्"

वत्तीसंगुलदीहं चउवीसं अंगुलाइ दंडो से अट्ठंगुलादसीओ एगयरं हीणमहियं वा ॥ १ ॥

इति "एतत्प्रमाणान् न्यूनातिरिक्तप्रमाणं तु रजोहरणं सूत्रविरुद्धं मन्तव्यम्" किं च ओघनिर्युक्तिसूत्रवृत्त्योरेव विशेषतो

वृत्तावपि च बोध्यं, तत्पाठस्तु अग्रेतनप्रश्नोत्तरे दर्शयिष्यते" इति रजोहरणोपरि केषांचित् सर्वदा और्णिकनिषद्यावन्धनं रूढ्यैवेतिविचारः ॥ १२१ ॥

ननु सांप्रतं केचित् साधवो रजोहरणस्य दण्डिकां सदशिकां कुर्वन्ति केचित्तु केवलामेव तां बिभ्रति तत्र किम् युक्तमिति चेद्, उच्यते, पूर्वं तु सर्वेषां रजोहरणस्य दण्डिका सूत्रोक्तनीत्या केवला एव आसीत् नतु सदशिका, पश्चात्पुनर्महोपयोगिभिः पूर्वाचार्यैराचरणया सदशिका कृताऽस्ति तत्कारणं च रुद्रपल्लीयगच्छीयश्रीवर्द्धमानसूरिकृताचारदिनकरग्रन्थोक्तम् इदं "पूर्वं कस्यचित् साधोरनुपयोगात् रजोहरणदण्डिका क्वचित् निपतिता सा च केनचिद् अश्ववारेण गृहीत्वा कशात्वं नीता ततश्च ज्ञाततद्वृत्तान्तैः गुरुभिः सर्वेषां रजोहरणस्य दण्डिकायां दशाबन्धनम् अकारि इत्यादि" एवं हि यदा इयम् आचरणा कृता तदानीं तु प्रायः सर्वैरपि सुविहिताऽऽचार्यैः प्रमाणीकृता आसीत् इति संभाव्यते, अन्यथा श्रीसिद्धसेनसूरिश्रीमलयगिर्यादिकृतप्रवचनसारोद्धारपिण्डनिर्युक्तिवृत्त्यादिपाठाऽसंगतिः स्यात्, तथा च तत्पाठः

"बाह्याभ्यन्तरनिषद्याविरहितम् एकनिषद्यं सदशं रजोहरणम्"

इह किल संप्रति दशिकाभिः सह या च दण्डिका क्रियते सा सूत्रनीत्या केवला एव भवति न सदशिका तस्याश्च निषद्यात्रयं, तत्र या दण्डिकाया उपरि तिर्यग्वेष्टकत्रयप्रमाणपृथुला एकहस्तायामा कम्बलीखण्डरूपा सा आद्या निषद्या, तस्याश्च

१ एवं च कृते प्रायो न पतति, पतति चेत् साधूपकरणं ज्ञात्वा कश्चित् पश्चात् समानीय ददाति स्वस्यापि वा पतनसमये उपयोगः स्यादिति.

"एवं वयासी तुब्भेविणं भंते मुहपोत्तियाए मुहं बंधह तएणं से भगवं गोयमा मियादेवीए एवं वुत्ते समाणे मुहपोत्तियाए मुहं बंधइ त्ति" एतेन सर्वदा मुखवस्त्रिकया मुखं बध्नन्तो लिङ्गिनः सूत्रोत्थापकत्वेन महामिथ्यादृष्टित्वात् सम्यक्त्विनाम् अद्रष्टव्यमुखा ज्ञातव्याः "यदुक्तम् आगमे"

जे जिणवयणुत्तिण्णं वयणं भासंति अहव मन्नंति । सम्मद्दिट्ठीणं तद्दंसणं पि संसारवुड्ढिकरं ॥ १ ॥

इत्यादि इति दवरकेण सर्वदा मुखे मुखवस्त्रिकाबन्धनं सूत्रविरुद्धमितिविचारः ॥ १२० ॥

ननु सांप्रतं केचिद् रजोहरणोपरि और्णिकनिषद्यां सर्वदा बध्वा एव रक्षन्ति तत्किम् आगमानुसारि उत रूढिमात्रमेव इति चेद्, उच्यते, रूढिमात्रमेवेदम् इति ज्ञायते, आगमे यथाऽवसरम् उपवेशनार्थं तस्या उपदिष्टत्वाद्, यदुक्तं बृहत्कल्पवृत्तौ द्वितीये खण्डे "पाणिदय इत्यादि" गाथायाम् "निसिज्जित्ति" रजोहरणस्य निषद्याद्वयं निषदनार्थम् आदीयते इति, अत्र यद्यपि निषद्या द्वयमुक्तम् अस्ति परमिहैवशास्त्रे उत्तरत्र एकैव उक्ताऽस्ति तथाच तत्पाठः "औपग्रहिक्यां निषद्यायामुपविष्टश्चार्थं शृणोतीति" एवं योगशास्त्रवृत्तावपि प्रथमप्रकाशे चारित्राधिकारे प्रोक्तं च, आसनम् उपवेशनं तद्यत्र प्रदेशे चिकीर्षितं तं चक्षुषा निरीक्ष्य प्रमृज्य च रजोहरणेन वहि निषद्याम् आस्तीर्य उपविशेदिति "एवं प्रवचनसारोद्धारबृहद्वृत्तौ श्रीमलयगिरिकृतपिण्डनिर्युक्ति-

१ आवश्यकनिर्युक्तावपि कायोत्सर्गाध्ययनस्य पञ्चमाध्ययने दक्षिणहस्ते मुखवस्त्रिकाधारणम् उक्तम् "तथाहि" चउरगुलमुहपोत्ति उज्जुए डव्वहत्थिरयहरण वोसट्ठचत्तदेहो काउस्सग्गं करेज्जाहि

ननु छद्मस्थसाधवस्तु प्रतिलेखनां कुर्वन्त्येव परं केवलिनः कुर्वन्ति नवा, 'उच्यते, यदि वस्त्रादिकं जीवसंसक्तं भवेत् तदा केवलिनः प्रतिलेखनां कुर्वन्ति न अन्यथा, छद्मस्थानां तु जीवसंसक्तं भवतु वा मा भवतु प्रतिलेखना कर्त्तव्या एव "यदुक्तं श्रीभद्रबाहुस्वामिभिरोघनिर्युक्तौ"

पाणीहिं संसत्ता पडिलेहा हुंति केवलीणं तु। संसत्तमसंसत्ता छउमत्थाणं तु पडिलेहा ॥ १ ॥

संसज्जइ धुवमेयं अपेहियं तेण पुव्वपडिलेहा। पडिलेहियम्मि संसज्जइ त्ति संसत्तमेव जिणा ॥ २ ॥

इति केवलिनामपि प्रतिलेखनाधिकारः ॥ ११९ ॥

ननु आधुनिकाः केचित् लिङ्गिनो निह्नवाः सर्वदा दवरकेण मुखवस्त्रिकां मुखे बद्धा एव रक्षन्ति तज्जिनाज्ञानुसारि उत तद्विरुद्धम्, उच्यते, जिनाऽऽज्ञाविरुद्धमेव इदम् इति ज्ञायते, क्वाऽपि सूत्रे ईदृग् विधेरनुक्तत्वात्, किंच शास्त्रेषु यत्र मुखवस्त्रिकाधिकारोऽस्ति तत्र क्वाऽपि दवरकस्य तु नामाऽपि नास्ति तथा श्रीसुधर्मस्वामिन आरभ्याविच्छिन्नवृद्धपरंपरयाऽपि क्वाऽपि धर्मगच्छे दवरकेण मुखवस्त्रिकाबन्धनं न दृश्यते, इत्यतो जिनागमसुविहिताचरणाभ्यां विरुद्धमेव तावद् दवरकबन्धनम् "अन्यच्च गणधरादिभिरपि यथावसरम् एव मुखे मुखवस्त्रिका बद्धा आसीत् न सर्वदा, यदि सर्वदा बद्धा भवेत् तर्हि विपाकसूत्रपाठाऽसङ्गतिः स्यात्, तथा च एकादशाङ्गस्य विपाकसूत्रस्य प्रथमाध्ययनपाठः" तएणं सा मियादेवी तं कट्ठसगडियं अणुकड्ढमाणी जेणेव भूमिघरए तेणेव उवागच्छइ उवागच्छइत्ता चउप्पुडेणं वत्थेणं मुहं बंधमाणी, भगवं, गोयमा

किमादर्श प्रेक्षते आहोस्विद् आत्मानम् अत्र आत्मशब्देन शरीरम् अभिगृह्यते उत "पलिभागमिति" प्रतिभागं प्रतिबिम्बं "भगवान्" आह "आदर्श तावत् प्रेक्षते एव तस्य स्फुटरूपस्य यथाऽवस्थिततया तेनोपलम्भात्, आत्मानम् आत्मशरीरं पुनर्न पश्यति तस्य तत्राभावात् स्वशरीरं हि स्वात्मनि व्यवस्थितं न आदर्शे ततः कथम् आत्मशरीरं च तत्र पश्येदिति, प्रतिभागं स्वशरीरस्य प्रतिबिम्बं पश्यति" अथ किमात्मकं प्रतिबिम्बम् "उच्यते" छायापुद्गलात्मकं" तथाहि सर्वम् ऐन्द्रियकं वस्तु स्थूलं चयापचयधर्मकं रश्मिवच्च रश्मयः "इति छायापुद्गला व्यवह्रियन्ते ते च छायापुद्गलाः प्रत्यक्षत एव सिद्धाः सर्वस्यापि स्थूलवस्तुनः छायाया अध्यक्षतः प्रतिप्राणिप्रतीतेरित्यादि" इत्यादर्श प्रेक्षमाणो मनुष्यः किं वस्तु प्रेक्षते इति विचारः ॥१२५॥

ननु कम्बलादिवस्त्रं गाढतरं वेष्टितं सत् यावद् आकाशप्रदेशान् अवगाहते विरलीकृतमपि तत् तावत् एव आकाशप्रदेशान् अवगाहते किंवा न्यूनाधिकान्, उच्यते, उभयथापि तुल्याकाशप्रदेशान् एव अवगाहते नतु न्यूनाधिकान्, यदुक्तं, प्रज्ञापना-सूत्रवृत्त्योरिन्द्रियपदे प्रथमोद्देशके "कंबल साडएणं भंते" इत्यादि कम्बलशाटकः आवेष्टितः परिवेष्टितो गाढतरं संवेल्लितः सन् यावद् आकाशप्रदेशान् अवगाह्य तिष्ठति "विरल्लिएवीति" विरलितोऽपि विरलीकृतोऽपि तावदेव आकाशप्रदेशान् स्पृष्ट्वा तिष्ठति "भगवान् आह" हंता गोयमा "इत्यादि, केवलं घन प्रतरमात्रकृतो विशेषः, प्रदेशसंख्या तु उभयत्राऽपि तुल्येत्यादि" इति वेष्टितविरलीकृतकम्बलादेस्तुल्याकाशप्रदेशस्पर्शविचारः ॥ १२६ ॥

ननु "अचित्तजोणिसुरनिरय" इति वचनाद् देवनारकाणां सूत्रे अचित्ता एव योनिरुक्ताऽस्ति, सा कथं संगच्छते

न्द्रियपदे प्रथमोद्देशके तथैवोक्तत्वात् तथा च तत्पाठः "अणगारस्स णं भंते भावियप्पणो मारणंतियसमुग्घाएणं समोहयस्स जे चरिमा निज्जरा पोग्गला सुहुमा णं ते पोग्गला पण्णत्ता समणाउसो सव्वं लोगं पि य णं ते ओग्गाहित्ता णं चिट्ठंति हंता गोयमा" इत्यादिः व्याख्या—हे भदन्त अनगारस्य भावितात्मनो मारणान्तिकसमुद्घातेन समवहतस्य ये चरमाः शैलेशीकालान्त्यसमयभाविनो निर्जराः पुद्गला अपगतकर्मभावाः परमाणवो ॥ निश्चितम् एतत् सूक्ष्माश्चक्षुरादीन्द्रियपथम् अतिक्रान्तास्ते पुद्गलाः प्रज्ञप्ता भवद्भिः, हे श्रमण आयुष्मन्, तथा निश्चितमेतत् सर्वलोकमपि ते पुद्गलाः स्पृष्ट्वा तिष्ठन्ति "एवं गौतमेन प्रश्ने कृते भगवानाह" हंता गोयमा "हन्त इति प्रत्यवधारणे एवमेव एतद् गौतम इत्यादिः"

ननु एतान् पुद्गलान् छद्मस्थो जानाति पश्यति नवा, उच्यते, एतान् पुद्गलान् केवली सर्वैरात्मशरीरप्रदेशैः जानाति पश्यति च, विशिष्टाऽवधिज्ञानविकलच्छद्मस्थो न जानाति न पश्यति च, देवोऽपि कश्चिन् न जानाति न पश्यति वा किमुत मनुष्य इत्याद्यधिकारोऽपि तत्रैव चतुर्थोपाङ्गे बोध्यः, इति शैलेशीकालान्त्यसमयभाविनिर्जराः पुद्गलाः कियत् क्षेत्रं स्पृशन्तीति विचारः ॥ १२४ ॥

ननु आदर्शं प्रेक्षमाणो मनुष्यः किम् आदर्शं प्रेक्षते उत आत्मशरीरं किंवा स्वप्रतिबिम्बमिति चेद्, शृणु, आदर्शं तु प्रेक्षते एव तस्य स्फुटरूपेण पुरो वर्त्तित्वात्, आत्मशरीरं पुनर्न प्रेक्षते तस्य स्वात्मनि व्यवस्थितत्वेन तत्राभावात्, स्वशरीरस्य प्रतिबिम्बं पुनः पश्यति तस्य छायापुद्गलात्मकत्वात्, यदुक्तं प्रज्ञापनासूत्रवृत्त्योः "आयंसो पहमाणो" इति आदर्शं प्रेक्षमाणो मनुष्यः

शङ्क्यः[1]" इति रजोहरणे चलवलिका धारणमाचरणयेति विचारस्तदन्तर्गत एव च रजोहरणस्वरूपविचारः ॥ १२२ ॥

ननु साधूनां दिवा शयनस्य शास्त्रे निषिद्धत्वाद् दैवसिकप्रतिक्रमणे "इच्छामि पडिक्कमिउं पगामसिज्झाए" इत्यादिसूत्रेण दिवाशयनातिचारप्रतिक्रमणं कथं संगच्छते, तथा रात्रौ गोचरचर्याया असंभवात् रात्रिकप्रतिक्रमणे "पडिक्कमामि गोयरचरियाए" इत्यादिसूत्रेण तद्विषयातिचारप्रतिक्रमणं कथं संजाघटीतीति चेद्, उच्यते" उत्सर्गतो दिवा शयननिषेधेऽपि अपवादतो ऽध्वखेदादौ तस्य अनिषेधात् न दोषः, इदमेव च सूत्रमत्रार्थे ज्ञापकं बोध्यम्, यदुक्तं साधुप्रतिक्रमणसूत्रावचूर्णौ "आह, दिवा शयनस्य निषिद्धत्वादसंभव एव अस्याऽतिचारस्य, न अपवादविषयत्वादस्य तथाहि, अपवादतः सुप्यते एव अध्वखेदादौ इदमेव ज्ञापकमिति "एवम् आवश्यकबृहद्वृत्तावपि ज्ञेयम्" तथा रात्रौ गोचरचर्याया असंभवेऽपि स्वप्नादौ तत्संभवात् रात्रिकप्रतिक्रमणेऽपि गोचरचर्यातिचारप्रतिक्रमणं युक्तमेवेति, न कश्चिद् दोषः, यदुक्तम् प्रतिक्रमणसूत्रावचूर्णौ ॥

ननु रात्रिकप्रतिक्रमणे "इच्छामि पडिक्कमिउं गोयरचरियाए" इत्यादिसूत्रमनर्थकम् रात्रौ अस्या असंभवात्, उच्यते, स्वप्नादौ संभवादित्यदोषः" इतिचूर्णिप्रान्ते, इति साधूनां दिवाशयनरात्रिगोचरचर्यातिचाराशङ्का निराकरणविचारः ॥ १२३ ॥

ननु केवलज्ञानी साधुर्मुक्तिम् गच्छन् चतुर्दशगुणस्थानचरमसमये यान् कर्मपुद्गलान् निर्जरयति, ते परमाणुपुद्गलाः परित्यक्तकर्मस्वभावाः सन्तः कियत् क्षेत्रं स्पृशन्तीति चेत्, उच्यते, ते पुद्गलाः सर्वलोकमपि स्पृशन्ति, श्रीप्रज्ञापनासूत्रवृत्त्योरि-

१ आचारदिनकरे आचरणया अधस्तनदवरकबन्धनाधिकारोपि अस्ति

रजोहरणस्वरूपमुक्तम् अस्ति तथाहि

"घणं मूले थिरं मज्झे अग्गे मद्दव जुत्तयं। एगंगियं अज्झुसिरं पोरायामं तिपासियं ॥ १ ॥

व्याख्या मूले दण्डपर्यन्ते घनं निविडं मध्ये मध्यप्रदेशे स्थिरं अग्रे दशिकापर्यन्ते मार्दवयुक्तं मृदुकर्त्तव्यम् इत्यर्थः "एकाङ्गिकं" तज्जातदशिकं सदशिककम्बलीखण्डनिष्पादितम् इत्यर्थः "अज्झुसिरं" अग्रन्थिला दशिका निपद्या च यस्य तत्" पोरायामंति "अंगुष्ठपर्वणि प्रतिष्ठितायाः प्रदेशिन्या यावन् मात्रं शुषिरं भवति तदा पूरकं कर्तव्यम्" दण्डिकायुक्ता निपद्या यथा तावन् मात्रं पूरयति तथा कर्त्तव्यमित्यर्थः "त्रिपाशितं" त्रीणि वेष्टनानि दवरकेण दत्त्वा पासितं पाशबन्धनेन, एवं विधं रजोहरणं कर्त्तव्यमिति "अमुम् एव श्लोकं भाष्यकारोपि आचष्टे"

अप्पोल्लं मिउपम्हं च पडिपुण्णं हत्थपूरिमं। रयणी पमाणमत्तं कुज्जापोरपरिग्गहं ॥ १०३४ ॥

व्याख्या—"अप्पोल्लं" दृढवेष्टनकरणात्, मृदुपक्ष्म च कर्त्तव्यं" मृदूनि दशिका पक्ष्माणि क्रियन्ते, प्रतिपूर्णं, सद्बाह्येन निषद्याद्वयेन युक्तं सत् हस्तं पूरयति यथा तथा कर्त्तव्यम्, तथा रत्निप्रमाणमात्रं यथा दण्डो हस्तप्रमाणो भवति तथा कर्त्तव्यम्, "कुज्जापोरपरिग्गहंति" पोरम् अङ्गुष्ठपर्व तस्मिन् नङ्गुष्ठपर्वणि लग्नया प्रदेशिन्या यद् भवति छिद्रं तद् यथा पूर्यते तेन दण्डकेन बाह्यनिषद्याद्वयरहितेन तथा कर्त्तव्यम्, अत एवं विधं पोरपरिग्रहम् अङ्गुष्ठपर्वप्रदेशिनी कुण्डलिकापूरणं कर्त्तव्यमिति "यद्यपि सूत्रे एकाङ्गिकमेवोक्तमस्ति, तथापि सांप्रतं तादृक् सदशिककम्बलीखण्डस्य अप्राप्तेर्दशिकासंबन्धो विधीयते, इति न सूत्रविरोधः

संसारकारणपरित्यागेन च एतयोः प्रवर्त्तेते न अन्यथा, इत्यतः पट्कोपन्यासो मुखसाध्यख्यापनार्थम् च मोक्षस्य उपन्यासः कृत इति न कश्चिद् दोषः" अयमर्थः सर्वोऽपि स्थानाङ्गवृत्तिमाश्रित्य इह दर्शितो विशेषार्थिना पुनः सैव विलोक्या इति नवतत्त्वेषु जीवाजीवभेदविचारः ॥ १२९ ॥

ननु पडशीतिककर्मग्रन्थे "मणणाण चक्खुवज्जा अणाहारे" इति गाथायां मनःपर्य्यवज्ञानचक्षुर्दर्शनवर्ज्जाः शेषा दशोपयोगा अनाहारके भवन्तीति वदता आचार्येण विग्रहगत्यादौ चक्षुर्दर्शनं निषिद्धम् अचक्षुर्दर्शनं च स्वीकृतं तत् कथं संगच्छते, तदवस्थायाम् उभययोरपि असंभवात्' तथाहि "चक्खुदिट्ठि अचक्खुसेसिंदियेति" वचनात् यथा तत्र चक्षुरिन्द्रियोपयोगो नास्ति तथा शेषेन्द्रियोपयोगोऽपि नास्ति एकस्यापि इन्द्रियस्य तदानीमनिष्पत्तेरिति चेद्, उच्यते, इन्द्रियानाश्रितं सामान्योपयोगमात्रमपि अचक्षुर्दर्शनशब्देनाऽभिधीयते तस्य च तदानीमपि सत्त्वान् नोक्तदोषाऽवकाशः, यदुक्तं श्रीभगवतीसूत्रवृत्तौ त्रयोदशशतके प्रथमोद्देशके "चक्खुदंसणी न उववज्जंति त्ति" इन्द्रियत्यागेन तत्रोत्पत्तेरिति 'तर्हि अचक्षुर्दर्शनिनः कथम् उत्पद्यन्ते, उच्यते, इन्द्रियानाश्रितस्य सामान्योपयोगमात्रस्य अचक्षुर्दर्शनशब्दाभिधेयस्य उत्पादसमयेऽपि भावात् अचक्षुर्दर्शनिन उत्पद्यन्ते उत्युच्यते। इति विग्रहगत्यादावपि जीवस्याचक्षुर्दर्शनं यथाऽस्ति तद्विचारः ॥ १३० ॥

ननु सर्वेपामपि युगलिकनराणां कियति आयुपि अवशिष्टे सति अपत्यप्रसवो जायते इति चेद्, उच्यते, पण्मासाऽवशेषे आयुपि तेपामपत्यजन्म भवति, तत एकोनाशीत्यादिदिनानि तेऽपत्यपालनं कुर्वन्ति, यदुक्तं प्रथमारकस्वरूपाधिकारे जम्बूद्वी-

१ एकोनपञ्चाशत् चतु पष्टि एकोनाशीति दिनानि।

अनवरतम् उद्वर्त्तनपरिवर्त्तनपराः तत्स्वभावत्वाद्, ये ते अमध्यप्रदेशा इति स्थानाङ्गसूत्रवृत्त्योः, तथा पञ्चदशविधेनाऽपि योगेन आत्माऽष्टौ प्रदेशान् विहाय उत्तप्तभाजनोदकवद् उद्वर्त्तमानैः सर्वैरेव आत्मप्रदेशैरात्मप्रदेशावष्टब्धाकाशदेशस्थं कार्मणशरीरयोग्यं कर्मदलिकं यत् बध्नाति तत्प्रयोगकर्म इत्युच्यते "इत्याद्याचाराङ्गसूत्रवृत्तौ" लोकविजयाख्यद्वितीयाध्ययनप्रथमोद्देशके तत्र हि एतदर्थसंवादी श्रीभगवतीसूत्रपाठोऽपि लिखितोऽस्ति, स तत एव अवसेयः ॥ तथा

स्पृश्यन्ते कर्मणा तेऽपि प्रदेशा आत्मनो यदि। तदा जीवो जगत्यस्मिन् नजीवत्वमवाप्नुयाद् ॥

इति, ज्ञानदीपिकायामपि बोध्यम्, इति जीवादीनामष्टमध्यप्रदेशविचारः ॥ १२८ ॥

ननु जीवाऽजीवादीनि नवतत्त्वानि स्थानाङ्गादिशास्त्रेषूक्तानि परं जीवाजीवव्यतिरिक्तानि पुण्यादीनि सप्ततत्त्वानि न सन्ति तथा युज्यमानत्वात् "तथाहि" पुण्यपापे कर्मणी बन्धोऽपि तदात्मक एव, कर्म च पुद्गलपरिणामः पुद्गलाश्च अजीवा इति आश्रवस्तु मिथ्यादर्शनादिरूपः परिणामो जीवस्य स च आत्मानं पुद्गलांश्च विरहय्य को अन्यः, संवरोऽपि आश्रवनिरोधलक्षणो देश सर्वभेदः, आत्मनः परिणामो निवृत्तिरूपो, निर्जरा तु कर्मपरिशाटो जीवः कर्मणां यत् पार्थक्यम् आपादयति स्वशक्त्या मोक्षो ऽपि आत्मा सर्वकर्मविरहित इति "तस्माज् जीवाजीवरूपे द्वे एव तत्त्वे स्तः इति चेद्, अत्रोच्यते, सत्यमेतत् सामान्यतो जीवाऽजीवपदार्थावेव सूत्रे उक्तौ स्तः, परं विशेषतस्तौ एव तत्र नवधोक्तौ सामान्यविशेषात्मकत्वात् वस्तुनः, स च एवं, यदुत आश्रवाद् बन्धो बन्धद्वारा याते च पुण्यपापे एतानि तत्त्वानि संसारकारणानि संवरनिर्जरे च मोक्षस्य हेतू

(१),तथा तेऽष्टौ जीवप्रदेशा जघन्यत एकस्मिन् नाकाशप्रदेशे अवगाहन्ते, द्वयोर्वा त्रिषु वा चतुर्षु वा पञ्चसु वा षट्सु वा अवगाहन्ते, तेषां संकोचविकाशस्वभावत्वात् उत्कर्षतोऽष्टसु एकैकप्रदेशे अवगाहनात्, परं सप्तसु प्रदेशेषु नावगाहन्ते तथैव तत्स्वभावात्, (२) तथा पुनस्ते अष्टौ जीवप्रदेशाः कर्मलिप्ता न भवन्ति अविचलस्वभावत्वात्, सर्वदा निरावरणा एवाऽवतिष्ठन्ते शेषास्तु कर्मलिप्ता भवन्ति एव आवर्त्तमानजलवत् निरन्तरम् उद्वर्त्तनपरिवर्त्तनपरत्वात्, (३) एते च सर्वेऽप्यर्थाः श्रीमद्भगवतीस्थानाङ्गाचाराङ्गसूत्रवृत्त्यादौ प्रोक्ताः सन्ति, तथा च क्रमेण तत्पाठः "अट्ठधम्मत्थिकायस्स मज्झपएसेत्ति" एते च रुचकप्रदेशाष्टकावगाहिनोऽवसेया इति चूर्णिकारः, इह च यद्यपि लोकप्रमाणत्वेन धर्मास्तिकायादेर्मध्यं रत्नप्रभाऽवकाशान्तरे एव भवति न रुचके, तथापि दिशाम् अनुदिशां च तत्प्रभवत्वात् धर्मास्तिकायादिमध्यं तत्र विवक्षितमिति संभाव्यते "जीवत्थिकायस्सत्ति" प्रत्येकं जीवानामित्यर्थः ते च सर्वस्याम् अवगाहनायां मध्यभागे एव भवन्ति इति मध्यप्रदेशा उच्यन्ते "एएसिणं भंते अट्ठजीवत्थिकायस्स मज्झपदेसा कतिसु आगासपएसेसु ओगाहंते गोयमा० जहन्नेणं एकंसि वा दोहिं वा तिहिं वा चउहिं वा पंचहिं वा छहिं वा उक्कोसेणं अट्ठसु नो चेव णं सत्तसु त्ति" संकोचविकाशधर्मत्वात् तेषां "उक्कोसेणं अट्ठसुत्ति" एकैकस्मिंस्तेषाम् अवगाहनात् "नो चेव णं सत्तसु त्ति" वस्तुस्वभावादिति श्रीभगवतीसूत्रवृत्त्योः पञ्चविंशतिशतके चतुर्थोद्देशके; तथा "अट्ठधम्म" इत्यादि स्पष्टं नवरं धर्माधर्माकाशानां मध्यप्रदेशास्ते ये रुचकरूपा इति, जीवस्याऽपि केवलिसमुद्घाते रुचकस्था एव ते अन्यदा तु अष्टावविचला, एते मध्यप्रदेशाः, शेषास्तु आवर्त्तमानजलमिव

सूक्ष्मैकेन्द्रियाणां सर्वलोकव्यापकस्य सूत्रे उक्तत्वादिति चेद्, उच्यते, सूक्ष्मैकेन्द्रियाणां सर्वलोकव्यापित्वेऽपि तत्प्रदेशैर्देवनारकोपपातस्थानपुद्गलाः परस्परानुगमेन न सम्बद्धाः सन्ति इत्यतस्तेषाम् अचित्ता एव योनिरिति न कश्चिद् दोषः, यदुक्तं प्रज्ञापनावृत्तौ नवमपदे, यद्यपि च सूक्ष्मैकेन्द्रियाः सकललोकव्यापिनस्तथापि न तत् प्रदेशैरुपपातस्थानपुद्गला अन्योन्यानुगमेन सम्बद्धा, इति अचित्ता एव तेषां योनिरिति, एवं संग्रहणीवृत्तावपि बोध्यं, श्रीभगवतीवृत्तौ दशमशतके द्वितीयोद्देशकेऽप्युक्तमस्ति, तथाहि "सत्यपि एकेन्द्रियसूक्ष्मजीवनिकायसंभवे नारकदेवानां यद् उपपातक्षेत्रं तन् न केनचिज् जीवेन परिगृहीतमिति, अचित्ता तेषां योनिरिति" इति देवनारकयोनेरचित्तत्वे शङ्कानिराकरणविचारः ॥ १२७ ॥

ननु धर्मास्तिकायाऽधर्मास्तिकायाऽऽकाशास्तिकायजीवास्तिकायानां चतुर्णामपि द्रव्याणां ये ये अष्टौ मध्यप्रदेशास्ते रुचकप्रदेशा उच्यन्ते "तत्र आकाशस्याऽष्टौ मध्यप्रदेशास्तु समभूतलप्रदेशे मेरुमध्यस्था एवेति प्रसिद्धमेव, परं धर्माऽधर्मजीवास्तिकायानां मध्यप्रदेशाः क्व सन्ति, तथा केवली समुद्घातकाले जीवस्य अष्टौ मध्यप्रदेशाः क्वाऽवतिष्ठन्ते (१) तथा ते अष्टौ जीवप्रदेशाः कतिषु आकाशप्रदेशेषु अवगाहन्ते (२) तथा पुनस्ते अष्टौ कर्मलिप्ता भवन्ति नवा (३) इति चेच्छृणु" धर्माऽधर्माऽस्तिकाययो-र्ये अष्टौ मध्यप्रदेशास्ते आकाशस्य रुचकप्रदेशाष्टके सर्वदा भवन्ति, तयोर्लोकाकाशतुल्यप्रमाणत्वात् स्वप्रदेशैर्लोकाकाशप्रदेशान् अभिव्याप्य अविचलतया सर्वदा अवस्थानाच् च, तथा जीवानाम् अष्टौ मध्यप्रदेशास्तु स्वस्वशरीरस्य मध्यभागे एव सर्वदा भवन्ति, केवलीसमुद्घातकाले तु मेरुमध्यस्थरुचकप्रदेशाऽष्टके एव तेऽपि अवतिष्ठन्ते, अन्यदा त्वविचला एवेति

न्तवचनानां परस्पराऽविरोधितया अत्र प्रकारान्तरेण अर्थयोजनाविधानात्, तथाहि अत्र आद्यपदे अणेगसो इति पदम् अध्याहार्यं, ततश्च अयम् अन्वयोः देवेन्द्रचक्रवर्त्तित्वादिपदं मया अनेकशः प्राप्तं, तथा अन्ये राज्यादयो उत्तमा भोगा अनन्तकृत्वो अनन्तवारान् मया प्राप्तास्तथाऽपि अहं तैस्तृप्तिं न गत इति। एवम् अर्थयोजनाभिधाने न कश्चिद् विरोधोऽन्यथा वा आप्तोक्तिवेत्तृभिः सुधीभिर्यथासंभवम् एतदर्थयोजना विधेया, पुनरत्र कश्चित् पृच्छति देवेन्द्रत्वादिभावा यदि अनन्तशो न प्राप्तास्तर्हिं कतिवारान् प्राप्ता इति, तत्रोच्यते, तीर्थकरत्वं यदि कश्चिद् जीवः प्राप्नोति तर्हिं एकश एव नतु पुनःपुनरिति प्रसिद्धमेव, तथा भावितात्माऽनगारत्वम् उत्कर्षतोऽष्टौ वारान् केचिद् जीवाः प्राप्नुवन्ति अष्टभवेष्वेव तत्प्राप्तेरभिहितत्वात्, यदुक्तं श्रीभगवतीसूत्रवृत्त्योः ॥ कति विहाणं भंते आराहणा पण्णत्ता गोयमा तिविहा आराहणा पण्णत्ता तं जहा णाणाराहणा "उपधानाद्युपचारकरणं" दंसणाराहणा निःशङ्कितत्वादि तदाचारानुपालनं, चरित्ताराहणा, निरतिचारता, णाणाराहणाणं, भंते कइ विहा पण्णत्ता, गोयमा तिविहा पण्णत्ता तं जहा उक्कोसिया मज्झिमा जहण्णा, दंसणाराहणाणं भंते कति विहा पण्णत्ता एवं चेव तिविहा वि एवं चेव चरित्ताराहणा वि, जस्स णं भंते उक्कोसिया णाणाराहणा तस्स उक्कोसिया दंसणाराहणा, जस्स उक्कोसिया दंसणाराहणा

१ यद्वा किमपि पदं न अध्याहार्यं केवलमर्थयोजनैव एवं विधेया तथाहि देवेन्द्रचक्रवर्त्तित्वादिपदं मया प्राप्तम् एकशो अनेकशो वा लब्धम् इत्यर्थ अग्रे प्राग्वद्।

इति गाथा दृश्यते, परं मानुषोत्तरनगाद् बहिर्नद्यभावस्योक्तत्वात् कथं पुष्करोदधिगमनं तासां संभवतीति चिन्त्यम्'

एवं नरोत्तरनगाऽभिमुखाः सरितोऽखिलाः । विलीयन्त इह ततः परं तासामभावतः ॥ ७८७ ॥

इति लोकप्रकाशेऽप्युक्तमस्ति "स्थानाङ्गसूत्रे सप्तमस्थाने पाठस्तु अयम्" पुक्खरवरदीवड्डपुरत्थिमद्धेणं सत्त वासा तहेव नवरं पुरत्थाभिमुहीओ पुक्खरोदसमुद्दं समुप्पेंति । पच्चत्थाभि मुहीओ कालोदसमुद्दं इत्यादिः' इह साक्षात् पाठदर्शनात् तासां पुष्करोदधिगमनं युक्तमेवेति ज्ञायते "इति पुष्करार्द्धे वहिर्मुखा नद्यः क्व प्रविशन्तीति विचारः ॥ १३४ ॥

ननु जीवैर्यथा देवत्वनृपत्वादयो भावा अनन्तशः प्राप्तास्तथा इन्द्रत्वतीर्थकरत्वभावितात्माऽनगारत्वचक्रित्वार्द्धचक्रित्वादयो भावा अनन्तशः प्राप्ता नवा, उच्यते, देवेन्द्रत्वादिभावा अनन्तशो न प्राप्ता एव, शेषास्तु सर्वेऽपि अनन्तशः प्राप्ताः । यदुक्तम् आचाराङ्गवृत्तौ प्रथमोद्देशके ॥

देविंदचक्कवट्टित्तणाइ मोत्तुण तित्थयरभावं । अणगारभावियाप्पा विय सेसा य अणंतसो पत्ता ॥ १ ॥

इति देवेन्द्रचक्रवर्त्तित्वादि तथा तीर्थकरत्वं पुनर्भावितात्माऽनगारत्वं मुक्त्वा परित्यज्य शेषाः सर्वेऽपि भावा अनन्तशः प्राप्ता इत्यर्थः । आदिपदादर्द्धचक्रित्वादिपरिग्रहः ननु यद्येवं तर्हि ।

देविंदचक्कवट्टित्तणाइ रज्जाइ उत्तमा भोगा । पत्ता अनन्तखुत्तो न य हं तित्तिं गओ तेहिं ॥ २९२ ॥

इति मरणविधिप्रकीर्णकोक्तं वचो विरुध्येत, अत्र देवेन्द्रत्वादिभावानामपि अनन्तशः प्राप्तेरभिहितत्वादिति चेन् न । सिद्धा-

शीतोदाजलं च कथं समुद्रे प्रविशतीति चेद्, उच्यते, अधोग्रामाणाम् अन्ते सहस्रयोजनोच्चा
ततश्च जगती कस्योपरिस्थिताऽस्ति, शीतोदाजलं च कथं समुद्रे प्रविशतीति चेद्, उच्यते, अधोग्रामाणाम् अन्ते सहस्रयोजनोच्चा भूमिभित्तिर्विद्यते तदुपरि जयन्तद्वारयुक्ता जगतीभित्तिः स्थिताऽस्ति, तथा शीतोदा नद्यपि जगत्या अधस्तनभित्तिं योजनानां सहस्रं भित्त्वा समुद्रं प्रविशतीति न काऽपि अनुपपत्तिः। यदुक्तं लोकप्रकाशे सप्तदशतमे सर्गे

सहस्रयोजनान्युण्डा ग्रामा भवन्ति केचन ॥ २४ ॥
विजये नलिनावत्यां वप्राख्ये चान्तर्वर्त्तिनः। तेषामन्ते स्थिता भूमिभित्ती रोद्धुमिवार्णवम् ॥ २५ ॥
ततोऽधो लौकिकग्रामा इति ते ख्यातिमैयरुः। ऊर्ध्वं स्थिताऽधोग्रामाणां दिदृक्षुरिव कौतुकम् ॥ २६ ॥
तत्रैव जगतीभित्तिर्जयन्तद्वारराजिता। योजनानां सहस्रेषु याति भित्त्वा जगत्यधः ॥ २७ ॥
शीतोदाऽपि स्त्रीस्वभावा दिवाऽधोगामिनी क्रमात्।

इत्यादि। इति शीतोदानदीसमुद्रप्रवेशादिविचारः ॥ १३३ ॥

ननु पुष्करार्धे या मानुषोत्तरपर्वताभिमुखा नद्यः तासां जलानि क्व गच्छन्ति परतः समुद्राऽभावात् मानुषोत्तरनगस्य वलयाकारतया सर्वतः स्थितत्वादिति चेच्छृणु "तासां नदीनां जलानि मानुषोत्तरपर्वतस्य अधःप्रदेशेषु गच्छन्ति, यदुक्तं, क्षेत्रसमाससूत्रवृत्त्योः" "तह इह बहिमुह सलिला पविसंति य नरनगस्स अहो त्ति" तथा इह पुष्करार्धे बहिर्मुखा नद्यः परतः समुद्राभावात् नरनगस्याऽधःस्थलविशेषेषु प्रविशन्तीति क्वचित्तु "ठाणंगे"

भिंदित्तुं माणुसनगं पुक्खर उदहिं समल्लीणा ॥ १ ॥
भणियमिणं पुक्खरबहिगामिणीउ सलिलाओ।

पमज्ञप्तौ अन्तरद्वीपाधिकारे जीवाभिगमे च "छम्मासावसेसाउआ जुगलं पसवंति त्ति"

युग्मं सुतसुतारूपं षण्मासशेषजीविताः। प्रसूय यान्ति त्रिदिवमेते मृत्वा समाधिना ॥ २० ॥

इत्यादि लोकप्रकाशेऽपि एतेन एकोनाशीत्यादिदिनानि अपत्यपालनं विधाय तत्कालं युगलिनो म्रियन्ते इति भ्रान्तिः परास्ता, इति सर्वेषां युगलिनां षण्मासाऽवशेषे आयुषि अपत्यजन्मविचारः ॥ १३१ ॥

ननु त्रिपल्योपमायुष्कत्रिगव्यूतोच्छ्रितयुगलिनां द्वे शते षट्पञ्चाशच्च च पृष्टिकरण्डका उक्ताः, द्विपल्योपमायुषां द्विगव्यूतोच्छ्रितानां एक शतम् अष्टाविंशतिश्च ते उक्ताः, एकपल्योपमायुषाम् एकगव्यूतोच्छ्रितानां पल्योपमाऽसंख्येयभागायुषां चाष्टधनुःशतोच्छ्रितानां चतुःषष्टिः ते उक्तास्तत्र, पृष्टिकरण्डकशब्देन किं गृह्यते, उच्यते, पृष्टिवंशा गृह्यन्ते, यथा अस्मदादीनां लघुप्रमाणानाम् एकः पृष्टिवंशस्तथा तेषां बृहत्प्रमाणानां तावन्तस्ते भवन्ति, यदुक्तं जीवाभिगमवृत्तौ आन्तरद्वीपका मनुष्या अष्टौ धनुःशतान्युच्छ्रिता वक्तव्याश्चतुःषष्टिः पृष्टिकरण्डकाः पृष्टिवंशाः बृहत्प्रमाणानां हि ते बहवो भवन्तीत्यादि "एवमुत्तरत्र युगलिकाधिकारेऽपि उक्तमस्ति" इति युगलिनां पृष्टिकरण्डकशब्देन किं ग्राह्यमितिविचारः ॥ १३२ ॥

ननु मेरोः पश्चिमायां दिशि समभूतलाद् आरभ्य क्रमाद् हीयमाना पृथ्वीनलिनावतीवप्रविजयक्षेत्रयोर्विषये सहस्रं योजनानि उण्डा जाता अस्ति, तत्र वर्त्तिनो ये केचिद् ग्रामास्ते अधोग्रामा उच्यन्ते, तत्र प्रदेशे शीतोदा पि नदी समभूतलापेक्षया सहस्रयोजनाधः प्रवहति, जयन्तनाम्ना द्वारेण युक्ता जगती समुद्रश्च इत्युभयमपि नद्यपेक्षया सहस्रयोजनोपरि वर्तते

नोइन्द्रियोपयुक्ता उत्पद्यन्ते इत्युच्यते ॥ इति त्रयोदशशते प्रथमोद्देशके, इति द्रव्यभावमनःस्वरूपादिविचारः ॥ १३६ ॥

ननु "सव्वजीवाणं पि यणं अक्खरस्स अणंतो भागो निच्चुग्घाडिओ" इति वचनात् सिद्धान्ते सर्वेषामपि जीवानामक्षरस्य अनन्ततमो भागो नित्योद्घाटितः सर्वदैवानाच्छादित उक्तस्तत्राक्षरशब्देन किं गृह्यते 'उच्यते, मुख्यवृत्त्या तु अक्षरशब्देनात्र केवलज्ञानं गृह्यते प्रसङ्गात्पुनर्मतिश्रुतज्ञाने अपि गृह्येते, बृहत्कल्पवृत्तौ अक्षरश्रुताधिकारे नन्दीवृत्तौ श्रुतज्ञानाधिकारे च इत्थमेव उक्तत्वात्, तथा च तावद् बृहत्कल्पवृत्तिपाठ उक्तं सर्वाऽऽकाशप्रदेशेभ्योऽनन्तगुणं ज्ञानमिदानीं यथा तदक्षरमुच्यते तथा भावयति ।

"णाणं तु अक्खरं जेण खरति न कयाइ तं तु जीवा । तो तस्स उ अणंतभागो न वरिज्जति सव्वजीवाणं"

येन कारणेन न कदाचिदपि तज् ज्ञानं जीवात् क्षरति भ्रंशमुपयाति, तेन कारणेन ज्ञानमक्षरमुच्यते "कथमेतदवसीयते न कदाचिदपि ज्ञानं जीवात् क्षरति, इत्यत आह तस्याऽक्षरस्य अनन्तभागो अतिप्रबलेनाऽपि ज्ञानावरणोदयेन संसारस्थानां सर्वजीवानां न आव्रियते, उक्तं च "सव्वजीवाणं पि यणं अक्खरस्स अणंतो भागो निच्चुग्घाडिओ" इति नित्योद्घाटो नाम नित्याप्रावृत्तः केन पुनराच्छाद्यते येन ज्ञानस्याऽनन्तभागो नित्याप्रावृत इत्याह ॥

इक्केक्को जियदेसो नाणावरणस्स हुंतणं तेहिं । अविभागेहि आवरितो सव्वजियाणं जिणे मोत्तुं ॥

जिनान् केवलज्ञानिनो मुक्त्वा शेषाणां सर्वजीवानामेकैको जीवप्रदेशो ज्ञानावरणीयस्य कर्मणोऽनन्तैरविभागैरविभागपरिच्छेदैः, येषां ततोऽपि अधो विभागः कर्तुं न शक्यते, ते अविभागपरिच्छेदास्तैरावृतो, यदि एवं कथम् अनन्तभागो ज्ञानस्य नित्या

ननु द्रव्यभावमनसोः किं स्वरूपं तथा द्रव्यमनो विना भावमनो भवति नवा, पुनर्भावमनो विना द्रव्यमनो भवति नवा, उच्यते, संज्ञिपञ्चेन्द्रियैर्मनःपर्याप्तिनामकर्मोदयतो मनोयोग्यपुद्गलद्रव्याणि आदाय तानि मनस्त्वेन परिणामितानि द्रव्यमन उच्यते, अथ तानि मनोद्रव्याणि आलम्ब्य जीवस्य यो मननव्यापारस्तत् भावमन उच्यते, यदाह नन्द्यध्ययनचूर्णिकृत्

"मणपज्जत्ति नाम कम्मोदयतो जोगो मणो दव्वे घेत्तुं मणत्तेण परणामिया दव्वा दव्वमणो भण्णइ"

जीवो पुण मणणपरिणामकिरियावंतो भावमणो किं भणियं होइ मणदव्वालंबणो जीवस्स मणणवावारो भावमणो भन्नइत्ति "तथा द्रव्यमनो विनाभावमनो न भवति असंज्ञिवत्, द्रव्यमनस्तु भावमनो विनाऽपि स्यात् भवस्थकेवलिवत्, यदुक्तं लोकप्रकाशे"

द्रव्यचित्तं विना भावचित्तं न स्यादसंज्ञिवत् । विनाऽपि भावचित्तं तु द्रव्यतो जिनवद् भवेत् ॥ ११ ॥

इति भावमनो विनाऽपि द्रव्यमनो भवति, यथा भवस्थकेवलिन इति प्रोक्तम् प्रज्ञापनावृत्तावपीति, एतेन एकेन्द्रियाणां सर्वेषामपि असंज्ञिजीवानां द्रव्यमनोऽभावात् भावमनोऽपि नास्ति । इत्यावेदितम् ॥ किञ्च यदा तु भावमनःशब्देन चैतन्यमात्रं विवक्ष्यते तदा तु द्रव्यमनो विनापि भावमनः स्यादेव तच्च असंज्ञिनामपि अस्ति एव, अनेनैव चाभिप्रायेण श्रीभगवतीसूत्रवृत्त्योरपि भावमन उपयुक्तानां जीवानां परभवे उत्पत्ति रुक्ताऽस्ति तथा च तत्पाठः ॥ नोइंदिओ उवउत्ता उववज्जंति, नोइन्द्रियं मनः तत्र च यद्यपि मनः पर्याप्त्यभावे द्रव्यमनो नास्ति तथापि भावमनसश्च चैतन्यरूपस्य सदा भावात्, तेनोपयुक्तानामुत्पत्तेः,

आराहेत्ता कतिहिं भवग्गहणेहिं एवं चेव। उक्कोसियेणं भंते चरित्ताराहणं आराहेत्ता एवं चेव, नवरं अत्थे गइए कप्पातीतएसु उववज्झति" उत्कृष्टचारित्राराधनावतः सौधर्मादिकल्पेष्वगमनात्, मज्झिमियाणं भंते णाणाराहणं आराहेत्ता कतिहिं भवग्गहणेहिं सिज्झइ जाव अंतं करेति, गोयमा अत्थे गतिए दोच्चेणं भवग्गहणेणं सिज्झति जाव अंतं करेति "अधिकृतमनुष्यभवापेक्षया द्वितीयेन मनुष्यभवेनेति" तच्चं पुण भवग्गहणं णातिक्कमति" एताश्च चारित्राराधनाः संवलिता ज्ञानाद्याराधना इह विवक्षिताः कथमन्यथा जघन्यज्ञानाराधनाम् आश्रित्य वक्ष्यति "सत्तट्ठ भवग्गहणाइं पुण णाइक्कमति त्ति" यतश्चारित्राराधनाया एवेदं फलम् उक्तं, यदाह "अट्ठभवाउ चरत्तेत्ति" श्रुतसम्यक्त्वदेशविरतिभवास्तु असंख्येया उक्तास्ततः चरणाराधनारहितज्ञानदर्शनाराधना असंख्येयभविका अपि भवन्ति नतु अष्टभविका एवेति "मज्झिमियंणं भंते दंसणाराहणं आराहेत्ता एवं चेव, एवं मज्झिमियं चरित्ताराहणं पि जहण्णियं णं भंते णाणाराहणं आराहेत्ता कतिहिं भवग्गहणेहिं सिज्झति, जाव अंतं करेति, गोयमा अत्थेग इए तच्चेणं भवग्गणेणं सिज्झति जाव अंतं करेति, सत्तट्ठभवग्गहणाइं पुण णाइक्कमति एवं दंसणाराहणं पि एवं चरित्ताराहणं पि" इति भगवत्यष्टमशते दशमोद्देशके विशेषार्थस्तु एतद्वृत्तेर्ज्ञेयः' तथा इन्द्रत्वचक्रित्ववासुदेवत्वादिभावान् जीवः संसारे वसन् कति वारान् प्राप्नोतीति तु क्वापि शास्त्रे दृष्टं नास्तीति न लिख्यते, हीरप्रश्नेऽपि एतत्प्रश्नस्य इदमेव उत्तरं प्रोक्तमस्ति। इति। इन्द्रत्वचक्रित्वादिभावा जीवैरनन्तशो न प्राप्ता इति विचारः ॥ १३५ ॥

तस्स उक्कोसिया णाणाराहणा, गोयमा, जस्स उक्कोसिया णाणाराहणा तस्स दंसणाराहणा उक्कोसा वा अजहण्णुक्कोसा वा॥ "उत्कृष्टज्ञानाराधनावतो हि आद्ये द्वे दर्शनाराधने भवतो न पुनस्तृतीया तथा स्वभावत्वात् तस्येति" जस्स पुण उक्कोसिया दंसणाराहणा तस्स णाणाराहणा उक्कोसा वा जहण्णा वा अजहण्णमणुक्कोसा वा, जस्स णं भंते उक्कोसिया णाणाराहणा तस्सुक्कोसिया चरित्ताराहणा जस्सुक्कोसिया चरित्ता राहणा तस्स उक्कोसिया णाणाराहणा जहा उक्कोसिया णाणाराहणा य दंसणाराहणा य भणिया, तहा उक्कोसिया णाणाराहणा य चरित्ताराहणा य भाणियव्वा" उत्कृष्टज्ञानाराधनावतो हि चारित्रं प्रति नाऽल्पतमप्रयत्नता स्यात् तत्स्वभावत्वात् तस्येति "जस्स णं भंते उक्कोसिया दंसणाराहणा तस्सुक्कोसिया चरित्ताराहणा जस्सुक्कोसिया चरित्ताराहणा तस्सुक्कोसिया दंसणाराहणा, गोयमा जस्सुक्कोसिया दंसणाराहणा तस्स चरित्ताराहणा उक्कोसिया वा जहण्णा वा अजहण्णमणुक्कोसा वा, जस्स पुण उक्कोसिया चारित्ताराहणा तस्स दंसणाराहणा नियमा उक्कोसा उक्कोसियाणं भंते णाणाराहणं आराहेत्ता कतिहिं भवग्गहणेहिं सिज्झइ जाव अंतं करेइ गोयमा; अत्थेगइए तेणेव भवग्गहणेणं सिज्झइ जाव अंतं करेइ अत्थे गइए दोच्चेणं भवग्गहणेणं सिज्झइ जाव अंतं करेइ "उत्कृष्ट चारित्राराधनासद्भावे" अत्थेगइए कप्पोवएसु "कल्पोपगेषुसौधर्मादिदेवलोकोपगेषु देवेषु मध्ये उपपद्यते मध्यमचारित्राराधनासद्भावे" कप्पातीतएसु वा तिग्रैवेयकादिदेवेषु उववज्जइ उपपद्यते मध्यमोत्कृष्टचारित्राराधनासद्भावे "उक्कोसियाणं भंते दंसणाराहणं

प्रावृत्त इत्याह,,

जइ पुण सो विवरेज्जइ तेणं जीवो अजीवयं गच्छे। सुट्ठुवि मेहसमुदये होइ पहा चंदसूराणं ॥

यथा सुष्ठु अपि अतिशयेनाऽपि मेघसमुदये जाते तथा स्वभावत्वात् चन्द्रसूर्याणां प्रभा भवति, तथा प्रत्यक्षत उपलब्धे-रेवम् एकैकस्य जीवप्रदेशस्य अनन्तैर्ज्ञानावरणाविभागपरिच्छेदैरावरणेऽपि तथा स्वभावत्वात् ज्ञानस्य अनन्तभागो नित्योद्-घाटित एव, यदि पुनः सोऽपि आव्रियते तत एकान्ततो निश्चेतनत्वात् जीवोऽजीवताम् गच्छेत् अजीवो भवेत् घटवत् ॥ ननु कथम् उच्यते अनन्तभागो नित्योद्घाटो यावता समस्ति पृथिव्यादीनां सर्वथा ज्ञानम् आवृतमत आह ॥

अव्वत्तमक्खरं पुण पंचण्ह वि थीणगिद्धिसहिएणं। नाणावरणुदएणं बिंदिय माईकमविसोही ॥

पञ्चानामपि पृथिवीकायिकादीनां वनस्पतिकायपर्यन्तानां स्त्यानगृद्धिनिद्रासहितेन ज्ञानावरणोदयेन अक्षरं ज्ञानमव्यक्तं सुप्तमत्तमूर्च्छितादेरिवाऽस्फुटम् अतो न तत्रापि सर्वथा ज्ञानमावृत्तं; तत्रापि पृथिवीकायिकानाम् अत्यस्फुटं ततो अप्कायिक-तेजस्कायिकवायुकायिकवनस्पतिकायिकानां क्रमेण विशुद्धतरम्, इदं चूर्णिकारवचनात् लिखितं, ततः क्रमेण द्वीन्द्रियादौ अक्ष-रस्य विशुद्धिस्तावत् द्रष्टव्या यावद् अनुत्तरोपपातिनां, ततोऽपि चतुर्दशपूर्विणाम् उक्तं च।

तं चिय विसुज्झमाणं बिंदियमादिक्कमेण विन्नेयं। जा होंति णुत्तरसुरा सव्वविशुद्धं तु पुव्वधरे ॥ १ ॥

इह यद्यपि प्रागक्षरं सर्वाऽऽकाशप्रदेशेभ्यो अनन्तगुणं केवलम् अभिप्रेतं नित्याप्रावृतोऽपि अनन्तभागस्तस्य एव, तथापि

यपरिच्छेदनस्वभावं यद् ज्ञानं तद् यदा पटपर्य्यायं परिच्छेत्तुम् अलं तदा पटपर्य्यायस्यापि घटपर्य्यायरूपतापत्तिरन्यथा तस्य तत्परिछेदकत्वाऽनुपपत्तेः, तथा रूपस्वभावात्, ततो यावन्तः परिछेद्याः पर्यायास्तावन्तः परिछेदकास्तस्य केवलज्ञानस्य स्वभावा वेदितव्याः, स्वभावाश्च पर्य्यायास्ततः पर्य्यायान् अधिकृत्य सर्वद्रव्यपर्य्यायपरिमाणं केवलज्ञानम् उपपद्यते इत्यादि ॥

ननु अकारादिश्रुतकेवलज्ञानयोः पर्य्यायपरिमाणं तुल्यमेव किंवा न्यूनाधिकम् "उच्यते" तुल्यमेव, केवलं स्वपरपर्य्यायकृतो विशेषः "यदुक्तं" नन्दीवृत्तौ पर्यायपरिमाणचिन्तायां परमार्थतो न कश्चिद् अकारादिश्रुतकेवलज्ञानयोर्विशेषः" अयं तु विशेषः, केवलज्ञानं स्वपर्य्यायैरपि सर्वद्रव्यपर्य्यायपरिमाणतुल्यम् अकारादि तु स्वपरपर्य्यायैरेवेत्यादि "इति केवलज्ञानस्य स्वभावभेदादिविचारः" ॥ १३८ ॥

ननु विजयादिषु चतुर्षु विमानेषु उत्पन्नो जीवस्ततश्च्युत्वा मनुष्यभवं प्राप्य कदाचिदपि नैरयिकेषु भवनपतिषु तिर्यक्षु व्यन्तरेषु ज्योतिष्केषु च समागच्छति नवा 'उच्यते' नैरयिकादिषु नाऽऽगच्छति मनुष्यभवे सौधर्मादिषु चाऽऽगच्छति यदुक्तं प्रज्ञापनावृत्तौ पञ्चदशे इन्द्रियाख्ये पदे "इह विजयादिषु चतुर्षु विमानेषु गतो जीवो नियमात् तत उद्वृत्तो न जातु कदाचिदपि नैरयिकादिषु पञ्चेन्द्रियतिर्यक्पर्यवसानेषु तथा व्यन्तरज्योतिष्केषु च मध्ये समागमिष्यति, मनुष्येषु सौधर्मादिषु चागमिष्यतीति" इति विजयादिविमानगतस्य नरकादिगतिगमननिषेधविचारः ॥ १३९ ॥

ननु भरतचक्री निगोदादेर्निःसृत्य कतिभिर्भवैर्मुक्तिं गतः, तथा सम्यक्त्वं प्राप्य यः कदाचिदपि न तद्वमनं कुर्यात् स कति-

रुद्धम् 'उच्यते' जिनाऽऽज्ञाविरुद्धमेवेदं कृत्यम् इति जानीहि, निशीथसूत्रे एकोनविंशतितमोद्देशके गृहस्थानां सूत्रवाचनाया निषिद्धत्वात्, तथा च तत्पाठः ।

"जे अण्णउत्थियं वा गारत्थियं वा वाएति वायं तं वासाइज्जति से आवज्जति चाउम्मासियं परिहारट्ठाणं उग्घाइयं" इत्यादिः अत एव भगवद्पादावपि श्रावकवर्णके प्रतिपदं "लद्धट्ठा गहियट्ठा" इत्यादिपाठ एव दृश्यते, न तु सूत्राध्ययनपाठः, एवं तर्हि किं दशवैकालिकसूत्रमपि श्रावकाय न अध्याप्यं तत्रोच्यते दशवैकालिकस्य चतुर्थमध्ययनं षड्जीवनिकायमात्रमेवाध्याप्य नतु शेषं, यदुक्तम् आवश्यकचूर्णौ श्रावकाणां "जहन्नेणं अट्ठपवयणमायाओ उक्कोसेणं छज्जीवणिया सुत्तओ अत्थओ वि पिंडेसणं न सुत्तओ अत्थओ पुण उल्लावेणं सुणइ त्ति" एवमावश्यकनिर्युक्त्यादिपठननिषेधालापको ऽपि तत्र ज्ञेयः, अन्यत्रापि उक्तं च दशवैकालिकं षड् जीवनिकायतः पूर्वं पश्चाद् वा यः श्रावकान् पाठयति स तन्मनः कल्पितकदाचरण इत्यादि" इति श्रावकाणां षड्जीवनिकायाध्ययनव्यतिरिक्तसूत्रपठननिषेधविचारः ॥ १४४ ॥

ननु अम्बडो नाम यः श्रीवीरस्वामिनः श्रावकोऽभूत्, स जात्या ब्राह्मणो वा क्षत्रियो वा, तथा तस्य यद् विविधरूपकरणादिसामर्थ्यं तत्किं तपोजन्यवैक्रियलब्ध्यादिबलेन उत परितुष्टदेवतादत्तविद्याबलेन, तथा आगामि चतुर्विंशतिकायां यस्तीर्थंकरो भावी सोऽम्बडः क इति चेच्छृणु, इह शास्त्रदृष्ट्या चिन्त्यमानं तु श्रीवीरोपासकमम्बडद्वयं जातमिति संभाव्यते, तथाहि औपपातिकोपाङ्गे हि श्रीवीरश्रावको अम्बडः परिव्राट् जात्या ब्राह्मण उक्तस्तथा भूयिष्ठषष्ठभक्तादितपोजन्यमवधिज्ञानवैक्रियलब्ध्यादिकं तस्योक्त-

॥ ६४ ॥

नन्तु आधुनिकाः केचित् पाखण्डिनो निह्नवा आर्द्रकुमारो ऽभयकुमारप्रेषितरजोहरणादिदर्शनेन प्रतिबुद्ध इत्याहुः तदागमानुसारि उत तद्विरुद्धमितिचेद्, उच्यते, आगमविरुद्धमेवेदं वचो जानाहि, उत्सूत्रभाषकमन्तरेण को ऽन्य ईदृक् स्वकपोलकल्पितं सूत्रविरुद्धं वचो भाषितुमुत्सहते, यतः सूत्रे साक्षादेकान्ते जिनप्रतिमां दृष्ट्वा आर्द्रकुमारः प्रतिबुद्ध इत्युक्तमस्ति, तथा च सूत्रकृताङ्गसत्कार्द्रकीयाध्ययननिर्युक्तिपाठः ।

संवेगसमावन्नो मायी भत्तं चइत्तु दियलोए । चइऊणं अद्दउरे अद्दसुओ अद्दओ जाओ ॥ ९३ ॥
पीतीदोण्हउ दूओ पुच्छण अभयस्स पट्ठवे सो वि । तेण वि सम्मदिट्ठि त्ति होज्ज पडिमारहस्सगयं ॥ ९४ ॥
दट्ठुं संबुद्धो रक्खिओ य आसाणवाहणपलाओ । पव्वइयं तो धरिओ रज्जं न करेइ को अण्णो ॥ ९५ ॥

इति न च वाच्यं नेदं सूत्रवच इति, श्रुतकेवलिश्रीभद्रबाहुप्रणीतत्वेन निर्युक्तीनामपि सूत्रतुल्यत्वाभिधानात् "सुयकेवलिणा रइयमिति" वचनात् किंच श्रीभगवतीसूत्रानुयोगद्वारादावपि ॥

"सुत्तत्थो खलु पढमो बीओ निज्जुत्ति मीसिओ भणिओ । तइओ य निरवसेसो एस विही होइ अणुओगे"

इत्यादि वचनान्निर्युक्तिभाष्यचूर्ण्यादयः प्रमाणीकृताः सन्ति, अतस्तद्वचनं ये न मन्यन्ते ते सूत्रोत्थापका ज्ञेयाः, इत्यार्द्रकुमारप्रतिबोधहेतुविचारः ॥ १४३ ॥

नन्तु आधुनिकाः केचित्पाखण्डिनो गृहस्थान् अपि अङ्गोपाङ्गादिसिद्धान्तान् पाठयन्ति तत् जिनाऽऽज्ञानुसारि उत तद्वि-

वर्त्तान् यावदवतिष्ठन्ते, ते च पुद्गलपरावर्त्ता आवलिकाया असंख्येयभागे यावन्तः समयास्तत् तुल्या मन्तव्याः, इयं च सर्वाऽपि स्थितिः सांव्यवहारिकान् आश्रित्योक्ता अस्ति, ततो न मरुदेव्यादिभिर्व्यभिचारः (४) यदाह आगमः—सुहुम निगोए णं भंते, सुहुम निगोए त्ति कालओ किय चिरं होइ, गोयमा जहण्णेणं अंतो मुहुत्तं उक्कोसेणं असंखेज्जं कालं, असंखिज्जाओ उस्सप्पिणिओसप्पिणीओ, इत्यादिः "गोला य असंखेज्जा" इत्यादि संग्रहणीगाथावृत्तावपि अयमर्थो बोध्यः, इति सूक्ष्मबादरनिगोदादौ जीवानां स्थितिमानविचारः ॥ १४१ ॥

ननु येषां रोमभी रत्नकम्बलवस्त्रम् उत्पद्यते, ते मूषिका अग्नौ समुत्पद्यन्ते अत एव तद्वस्त्रमालिन्यम् अग्निप्रक्षेपेण शुध्यति, इत्युक्तिः श्रूयते तत्राग्नौ मूषिकोत्पत्तिः क्वापि शास्त्रे उक्ता अस्ति नवा, तथा कस्यचिद् उदरे गृहकोकिला समुत्पद्यते इति श्रूयते तत्र किं कारणमिति चेद् उच्यते, अनुयोगद्वारवृत्तौ आवश्यकनिक्षेपाधिकारे अग्नौ मूषिकोत्पत्तिरुक्ता ऽस्ति, तथा च तत्पाठः "इष्टकापाकाद्यग्निर्मूषिकावास इत्युच्यते तत्रहि अग्नौ किल मूषिकाः सम्मूर्च्छन्तीति" तथा उदरे गृहकोकिलोत्पत्तेः कारणं तु उक्तम् निशीथचूर्णौ, तथा च तत्पाठः ॥

"गिहकोइल अवयवसंमिस्सेण भुत्तेण पोट्टे किल गिहकोइला संमुच्छंति त्ति"

इत्यग्नौ मूषिकोत्पत्तेरुदरे गृहकोकिलोत्पत्तेश्च विचारः ॥ १४२ ॥

१ सामान्येन पचेंद्रियकायस्थितिः सातिरेकं सागरोपमं सहस्र तच्च चतुर्गतिभ्रमणतो बोध्यम् सामान्यतस्तु त्रसकायस्थितिः "दोसागरोवमसहस्साइ संखिज्ज वास ब्भहियाइं" इत्याद्यर्थोऽपि सग्रहणीवृत्तावुक्तो ऽस्ति

भिर्भवैर्मुक्तिं यातीति चेद् 'उच्यते' भरतस्तावत् सप्तभिरष्टभिर्वा भवैर्मुक्तिं गत इति संभाव्यते, यदुक्तम् आचाराङ्गवृत्तौ लोकसाराध्ययने तृतीयोद्देशके "भावयुद् वाऽर्हं शरीरं लब्ध्वा कश्चित् तेनैव भवेन अशेषकर्मक्षयं विधत्ते, मरुदेवी स्वामिनीवत्, कश्चित् सप्तभिरष्टभिर्वा भवैर्भरतवत्, कश्चिद् अपार्द्धपुद्गलपरावर्त्तेन, अपरो न सेत्स्यति एवेति" तथा अप्रतिपतितसम्यक्त्वो जन्तुरुत्कर्षतः सप्ताऽष्टौ वा भवान् संसारे तिष्ठति ततः परमवश्यं मुक्तिं याति, यदुक्तं सूत्रकृताङ्गवृत्तौ चतुर्दशाध्ययने "अप्रतिपतितसम्यक्त्वो जीव उत्कृष्टतः सप्ताष्टौ वा भवान् म्रियते नोर्ध्वमिति" इति भरतचक्रिणोऽप्रतिपतितसम्यक्त्वजीवस्य च भवसंख्याविचारः ॥ १४० ॥

ननु सूक्ष्मनिगोदात् निःसृत्य केचिद् जीवाः कालान्तरे पुनरपि सूक्ष्मनिगोदे यान्ति तर्हि उत्कर्षतस्तत्र कियत् कालम् अवतिष्ठन्ते (१) तथा केचित् सूक्ष्मनिगोदान् निःसृत्य बादरनिगोदे एव गत्यागतीकुर्वाणा उत्कर्षतः कियत् कालं तत्रावतिष्ठन्ते (२) तथा कदाचित् सूक्ष्मनिगोदे कदाचित् बादरनिगोदे एवं सामान्यनिगोदमात्रे उत्कर्षतः कियत् कालं तत्रावतिष्ठन्ते (३) तथा सूक्ष्मबादरसाधारणप्रत्येकरूपे वनस्पतिकायमात्रे जीवा उत्कर्षतः कियत्कालम् अवतिष्ठन्ते, इति चेद् शृणु, सांव्यवहारिका जीवाः सूक्ष्मनिगोदं गताः सन्तोऽसंख्याता उत्सर्पिण्यवसर्पिणीर्यावद् उत्कर्षतस्तत्रावतिष्ठन्ते, पश्चादवश्यं बादरनिगोदादिषु आगच्छन्ति ( १ ) तथा बादरनिगोदे उत्कर्षतः सप्ततिसागरोपमकोटाकोटी यावदवतिष्ठन्ते न परतः (२) तथा सामान्यनिगोदे सार्धौ द्वौ पुद्गलपरावर्त्तौ यावदवतिष्ठन्ते, अनन्तकालमित्यर्थः ( ३ ) तथा वनस्पतिकायमात्रे असंख्येयान् पुद्गलपरा-

वोहिं अहम्माहम्मेहिं नामायरिय उवज्झायसाहुलिंगीहिं जिनघरमढआवासोपकप्पिओसायसीलेहिं" इत्यादि महानिशीथाद्यागमवचनैश्चैत्यवासिप्रभृतीनां मिथ्यादृष्टित्वप्रतिपादनात् ॥

ननु तादृग् विम्बादिदर्शनादपि कस्यचिद् सम्यक्त्वाद्युत्पत्तिर्जायते ततस्तद्वन्दनार्थं गमने को दोष, इति चेच्छृणु, भवतु वा लिङ्गिप्रभृतिभिरालिङ्गितेषु चैत्येषु विम्बादिदर्शनात् कस्यचिद् कथंचित् सम्यक्त्वादिरत्नोत्पादस्तथापि "जइ वि हु सम्मुप्पाओ- कस्स वि" इत्यादिना कल्पभाष्ये निह्नववत् तच्चैत्यानां वर्जनीयत्वेनाभिधानात् न तत्र विवेकिनां गमनं संगच्छते, इत्यादिः सर्वोऽप्ययमर्थः प्रबोधोदयात् संक्षिप्य इह लिखितः, श्रीवृहत्कल्पभाष्यचूर्ण्यादौ तु प्रथमखण्डे विस्तरेणायमर्थो बोध्यः।

ननु निह्नवादिपरिगृहीताः प्रतिमा यथा अवन्द्यास्तथा तत्कृतस्तोत्रप्रकरणादिकमपि सम्यग् दृशाम् अग्राह्यमेव उत ग्राह्यमिति 'उच्यते' अग्राह्यमेव यदुक्तं श्रीमहानिशीथे चतुर्थाध्ययने "जे भिक्खुवा भिक्खुणी वा परपाखंडीणं पसंसं करेज्जा जेआवि णिण्हगाणं पसंसं करेज्जा जेआवि निण्हगाणं अनुकूलं भासेज्जा जेआवि निण्हगाणं आययणं पविसिज्जा जेणावि निण्हगाणं गंथं सत्थं पयक्खरं वा परूवेज्जा जेणं निण्हगाणं संतिए कायकिलेसाइतवे वा संजमेइ वा णाणेइ वा विणाणेइ वा सुए वा पंडिचेइ वा अभिमुहमुद्धपरिसा मज्झगए सिलाहेज्जा से विआणं परिमाहम्मिएसु उववज्जेज्जा ? जहा सुमतीति" इति भगवतां गुह्यप्रदेशस्यातिगुप्तविचारस्तदन्तर्गत एव अशुद्धमतिमाऽवन्द्यत्वविचारो निह्नवप्रणीतग्रन्थादेरग्राह्यत्वविचारश्च ॥ १४७ ॥

"जयवीयराय" इत्यादि इदञ्च प्रणिधानं न निदानरूपं प्रायेण निःसङ्गाभिलाषरूपत्वात् एतच्च अप्रमत्तसंयतादर्वाक् कर्त्तव्यम् अप्रमत्तादीनां मोक्षेऽपि अनभिलाषादित्यादि विस्तरार्थिना तु पूजापञ्चाशकवृत्तिर्विलोक्या, इति नवनिदानादिविचारः ॥ १४६ ॥

ननु भगवतो मुष्कपुंश्चिह्नादिगुह्यप्रदेश इतरपुरुषवद् दृष्टिपथम् आयाति न वा "उच्यते" सुतरां गुप्तत्वेन प्रायशो गजजात्याश्वयोरिव दृष्टिपथं न आयात्येव, प्रायश इति कथनाद् गृहस्थत्वे स्त्रीसंभोगकाले कथंचिद् दृष्टिपथागमनेऽपि न दोषः, यदुक्तं योगशास्त्रवृत्तौ प्रथमप्रकाशे

स्वामिनःकुञ्जरस्येव मुष्कौ गूढौ समस्थितौ । अतिगूढं च पुंश्चिह्नं कुलीनस्येव वाजिनः ॥ ३० ॥

इति ननु सिद्धान्तेऽपि अयमर्थः क्वापि अस्ति "उच्यते" औपपातिकोपाङ्गसूत्रवृत्त्योरस्ति तथाहि "वरतुरगसुजायगुज्झदेसेत्ति" वरतुरगस्येव सुजातः सुगुप्तत्वेन सुनिष्पन्नो गुह्यदेशो यस्य स तथा, इति वीरप्रभुवर्णनाधिकारे" ननु एवं तर्हि केचित्प्रकटतरगुह्यप्रदेशा भगवत्प्रतिमाः कारयन्ति, ता वन्द्या नवा, उच्यते, ता हि तावद् भगवतः प्रतिमा एव न भवन्ति भगवत्प्रतिमानां भगवद्वद् गुह्यप्रदेशस्यापि अतिगुप्तत्वात्, तासां तु साक्षाद् दृश्यमानत्वात्, तथा च कथं तासां वन्द्यत्वं संजाघटीति, किंच उत्सूत्रवादिप्रतिष्ठापितानि गृहस्थप्रतिष्ठापितान्यपि च चैत्यानि अवन्द्यान्येव, यदुक्तं श्रीजिनपतिसूरिभिः प्रबोधोदये "पौर्णमासिकादिमतवर्त्तीनि चैत्यानि अवन्द्यान्येव अनधिकारिप्रतिष्ठापितत्वात् दिगम्बरादिपरिग्रहीतवद् इत्यादि" एवं स्वदर्शनमिथ्यादृष्टिभि श्चैत्यवासिप्रभृतिभिरपि परिगृहीताः प्रतिमा वर्जनीया एव "कूराभिग्गहियमहा मिच्छद्दिट्ठीहिं पा-

स्त्री स्वामितिप्रार्थनं तृतीयम् ॥ ३ ॥ स्त्रियाः पारवश्यादिकष्टं दृष्ट्वा अहं पुमान् स्वामिति प्रार्थनं चतुर्थम् ॥ ४ ॥ मनुष्यविषयाणाम् अशुचित्वाद् बहुरतदेवविषयं निदानं पञ्चमं, ॥५॥ ये देवाः स्वपरदेवदेवीसेवने स्वविकुर्वितदेवदेवीसेवने चाऽऽसक्तास्ते बहुरता उच्यन्ते" ये देवाः स्वयमेव देवत्वेन देवीत्वेन च विकुर्व्य सेवन्ते नतु परं ते स्वरतास्तद्विषयं निदानं षष्ठम् ॥६॥ एते षड्निदानकृतो भवान्तरे दुर्लभबोधिकाः स्युः अमैथुना ये सुरास्तेऽरतास्तद्विषयं निदानं सप्तमम् ॥७॥ एते त्रयो देवभेदाः, अहं साधुप्रतिलम्भकः श्राद्धः स्वामिति प्रार्थनमष्टमम् ॥ ८ ॥ व्रताऽऽकांक्षया दरिद्रः श्राद्धः स्वामिति प्रार्थनं नवमम् ॥ ९ ॥ एतानि पाश्चात्यानि त्रीणि निदानानि क्रमेण बोधिदेशसर्वविरतिदायकानि नतु सिद्धिदानीति, अयमर्थः सर्वोऽपि पाक्षिकसूत्रवृत्तावस्ति अन्यत्राप्युक्तं च

**निव-सिद्धि-इत्थि-पुरिसे-परपवियारे य-सपवियारे य । अप्पसुरय-सड्ढ-दरिद्दे हुज्जा नवनियाणाइ त्ति ॥१॥**

ननु तीर्थंकरत्वचरमदेहत्वादि प्रार्थनमपि राज्यादिप्रार्थनवद् दुष्टं न वा "उच्यते" तीर्थंकरत्वादावपि अप्रार्थनमेव भगवता श्रीवीरेण प्रशंसितम् इति, निदाने तु सद्वस्तुविषयिण्यपि अपवादपदं नास्ति निदानं साधूनां निषिद्धमेवेत्यर्थः, इति बृहत्कल्पवृत्तौ उक्तत्वात्, तीर्थंकरत्वादिप्रार्थनमपि साधूनां न युक्तमेव, किंच ननु कृत्स्नकर्मक्षयान् मोक्षो भवतु इतीदमपि निदानमेव, उच्यते सत्यमेतदपि निश्चयतः प्रतिषिद्धमेव "मोक्षे भवे च सर्वत्र निःस्पृहो मुनिसत्तमः" इत्याद्युक्तत्वात्, तथापि भावनायामपरिणतं सत्त्वम् अङ्गीकृत्य व्यवहारत इदमदुष्टमेवेत्यादि आवश्यकबृहद्वृत्तौ ध्यानशतकाधिकारे तथा योगशास्त्रवृत्तावपि उक्तं च

सप्तशतानि च तस्य शिष्या उक्ताः, प्रान्ते च अनशनेन ब्रह्मलोकं गतो महाविदेहे सेत्स्यति इत्युक्तं" तत्थ खलु इमे अट्ठ माहणपरिव्वायगा भवंति तं जहा कण्हे य १ करकंडेय २ अंबडे य ३ परासरे ४ कण्हे ५ दीवायणे ६ चेव देवगुत्ते य ७ नारए ८

इत्यादिसूत्रपाठस्तत एवावसेयो बहुत्वादत्र न लिख्यते, श्रीमुनिरत्नसूरिकृताम्बडचरित्रे तु एवमुक्तमस्ति, अम्बडो नाम रथपुरनिवासी जात्या क्षत्रियः सांख्यमतस्थगोरखयोगिनी प्रदत्तदेशसप्तकप्रभावात् संप्राप्तद्वात्रिंशद् वररमणीयुक्तप्राज्यराज्यादिसमृद्धिसमुदायः परितुष्टसूर्यादिप्रदत्तविविधविद्याभरः कियत् कालानन्तरं श्रीकेशिगुरूपदेशात् अवाप्तसम्यक्त्वरत्नः तद्वचनादेव विहित-श्रीवीरप्रभुचरणसेव श्चित्तशैथिल्यादष्टादशवारान् गृहीतमुक्तसम्यक्त्वः श्रीवीरप्रभुदर्शितसुलसाश्राविकास्थैर्याऽवलोकनात् सुदृढी भूतसम्यग्दर्शनः प्रान्ते पुत्राय राज्यं प्रदाय स्वयमनशनेन कालं कृत्वा स्वर्गं जगामेति, अन्यस्मिन् अम्बडचरित्रे अयमेव अम्बडो राजा आगामिचतुर्विंशतिकायां तीर्थकरो भावीति उक्तमस्ति, स्थानाङ्गवृत्तावपि अम्बडद्वयसंभावना कृताऽस्ति, नवरं तत्राम्बडः परिव्राजक एव सुलसापरीक्षक उक्तः, स एव च भावितीर्थकरजीवः प्रोक्तोऽस्ति, तत्त्वं पुनः केवलिनो बहुश्रुता वा विदन्ति यदस्ति तत्प्रामाण्यम्, इत्यम्बडश्रावकजात्यादिभेदविचारः ॥ १४५ ॥

नन्‍ु शास्त्रेषु यानि नवपापनिदानानि उक्तानि तानि कानि "उच्यते" भवान्तरे अहं राजा भवेयमितिप्रार्थनं प्रथमं निदानम् ॥ १ ॥ अलं मे बहुव्यापारेण राज्येन परं समृद्धिमान् गृही स्याम् इति प्रार्थनं द्वितीयम् ॥ २ ॥ पुरुषस्य विविधं कष्टं दृष्ट्वा अहं

भविकं मनुष्यस्यैव तद्भवे क्षायिकसम्यक्त्वारम्भकत्वात्, औपशमिकं ताद्भविकमेव क्षायोपशमिकं पुनरुभयथाऽपि प्राप्यते शेषपृथ्वीचतुष्टयनारकाणां तु क्षायिकं सम्यक्त्वम् नास्त्येव तद्वतां तेषु अनुत्पत्तेः इतरे द्वे भवतस्ते च प्राग्वद् ॥१॥ देवगतौ वैमानिकदेवानां तु त्रिविधमपि आद्यपृथ्वीत्रयनारकवद् एव, भवनपतिव्यन्तरज्योतिष्काणां पुनः क्षायिकम् नास्त्येव तद्वतां तेषु अनुत्पत्तेः अपरे द्वे प्राग्वत् ॥२॥ मनुष्यास्तु द्विविधाः संख्येयवर्षायुषो ऽसंख्येयवर्षायुषश्च तत्र आद्यानाम् औपशमिकं तु ताद्भविकमेव क्षायिकक्षायोपशमिके पुनस्ताद्भविके पारभविके च भवतः, असंख्येयवर्षायुषां पुनर्मनुष्याणाम् औपशमिकं क्षायिकं चाद्यपृथ्वीत्रयनारकवैमानिकदेववद् ज्ञेयम्, क्षायोपशमिकं तु ताद्भविकमेव कर्मग्रन्थिकाभिप्रायेण सैद्धान्तिकाभिप्रायेण तु पारभविकमपि लभ्यते (३) पञ्चेन्द्रियतिर्यञ्चोऽपि मनुष्यवद् द्वेधा तत्र असंख्येयवर्षायुषां पञ्चेन्द्रियतिरश्चां त्रीणि अपि सम्यक्त्वानि मनुष्यवद् वाच्यानि, तथा संख्येयवर्षायुष्कसंज्ञिपञ्चेन्द्रियतिरश्चां तत् स्त्रीणां च क्षायिकसम्यक्त्वं नास्ति एव इतरे द्वे प्राग्वद्, अन्येषां पुनर्जीवानाम् एकेन्द्रियादीनां त्रयाणां मध्ये एकमपि न संभवतीति (४) सर्वोऽप्ययमर्थः प्रवचनसारोद्धारगतैकोनपञ्चाशदधिकशततमद्वाराद् उद्धृत्य संक्षेपतो ऽत्र लिखितोऽस्ति विस्तरार्थिना तद् बृहद्वृत्तिर्विलोक्या ॥

ननु निश्चयनयमतेन लोके एको धर्मो ऽपरं तु सम्यक्त्वादिधर्मसाधनं तत्र धर्मप्राप्तिर्जीवस्य कदा भवति, उच्यते, धर्मसंग्र-

१ प्रज्ञापनावृत्तौ तु पञ्चमे विशेषपदे एवम् उक्तमस्ति "दो णाणा दो अन्नाणा" इति उत्कृष्टस्थितिका हि मनुष्यास्त्रिपल्योपमायुषस्तेषां च तावदज्ञाने नियमेन पुनः यदा षण्मासावशेषायुषो वैमानिकेषु बद्धायुषस्तदा सम्यक्त्वलाभात् द्वे ज्ञाने लभ्येते अवधिविभङ्गौ चासंख्येयवर्षायुषां न स्त इत्यादि एवं तिर्यगधिकारेपि ॥

ननु तत्त्वार्थश्रद्धानं सम्यक्त्वम् उच्यते तत्र श्रद्धानं च तथेति प्रत्ययः स च मानसो ऽभिलाषो न चायम् अपर्याप्तकाद्यव स्थायाम् इष्यते, सम्यक्त्वं तु तस्यामपि इष्टं षट्षष्टिसागरोपमरूपायास्तस्य उत्कृष्टस्थितेः प्रतिपादनात् ततः कथमिदं लक्षणम् उपपद्यते इति चेद् "उच्यते" तत्त्वार्थश्रद्धानं सम्यक्त्वस्य कार्यं, सम्यक्त्वं तु मिथ्यात्वक्षयोपशमादिजन्यः शुभआत्मपरिणाम-विशेषः, इदं च लक्षणम् अमनस्केषु सिद्धादिषु अपि व्यापकम् इति नोक्तदोषः ॥

ननु परपाखण्डिनां स्वशास्त्रोक्ततत्त्वार्थश्रद्धानभाजां यथाऽभिग्रहिकं मिथ्यात्वं तथा जैनानामपि तथा विधत्वात् कथं तन्न इति चेच्छृणु "पाखण्डिनामेव स्वशास्त्रनियन्त्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणाम् अभिग्रहिकं मिथ्यात्वं ज्ञेयं, जैनानां तु धर्माधर्मवादेन परीक्षापूर्वं तत्त्वम् आकलय्य स्वाऽभ्युपगतार्थं श्रद्दधानानां परपक्षप्रतिक्षेपदक्षत्वे ऽपि नाभिग्रहिकत्वं स्वशास्त्राऽनियन्त्रितत्वाद् विवेकालोकस्य यस्तु नाम्ना जैनो ऽपि स्वकुलाचारेणैव आगमपरीक्षां बाधते तस्याभिग्रहिकत्वमेव सम्यग्दृशो ऽपरीक्षितपक्षपातित्वाऽयोगात्" तदुक्तं हरिभद्रसूरिभिः ।

पक्षपातो न मे वीरे न द्वेषः कपिलादिषु । युक्तिमद् वचनं यस्य तस्य कार्यः परिग्रहः ॥ १ ॥

इति एष सर्वोऽपि अर्थो धर्मसंग्रहप्रकरणानुसारेण बोध्यः ॥ एतेन जैनानाम् अभिग्रहिकत्वं निराकृत्य सम्यक्त्वं प्रतिपादितं परं तत् क्षायिकमौपशमिकं क्षायोपशमिकं चेति त्रिविधमपि चतसृषु अपि गतिषु प्राप्यते नवा तत्र उच्यते, प्राप्यते एव केषांचिल्ल लघुकर्मणां, तथाहि नरकगतौ आद्यासु तिसृषु पृथ्वीषु त्रिविधमपि सम्यक्त्वं प्राप्यते, तत्र क्षायिकं तु पारभविक एव प्राप्यते न तु ताद्-

उत्सर्प्पिण्यवसर्प्पिण्यो ऽपक्रामन्ति, इत्यतः कालात् क्षेत्रं सूक्ष्मतरमिति द्वितीयोद्देशके । तथा ।

कालवृद्धौ द्रव्यभावक्षेत्रवृद्धिरसंशयम् । क्षेत्रवृद्धौ तु कालस्य भजना क्षेत्रसौक्ष्मतः ॥ १९ ॥
द्रव्यपर्य्यायर्योर्वृद्धिरवश्यं क्षेत्रवृद्धितः, अत्र शेषो विशेषश्च ज्ञेय आवश्यकादितः ॥ २० ॥

इति तृतीयसर्गेऽवधिज्ञानाधिकारे, इति द्रव्यक्षेत्रकालभावानां मध्ये कः कस्मात् सूक्ष्म इति विचारः ॥ १४८ ॥

ननु केवलिनामपि त्रयोदशगुणस्थानकान्ते सूक्ष्मक्रियाऽप्रतिपात्यादिशुक्लध्यानम् उक्तम्, ध्यानन्तु चित्तैकाग्र्यम् उच्यते तच्च केवलिनां न संभवति तेषां भावमनस एव अभावात् इति चेद् 'उच्यते' चित्तैकाग्र्यं ध्यानमिति तु छद्मस्थमाश्रित्य शास्त्रेषु पठ्यते, केवलिनस्तु कायनिश्चलत्वमेव ध्यानम् अस्ति इत्यतो न कश्चिद्दोषः, यदुक्तं गुणस्थानक्रमारोहसूत्रवृत्त्योः ॥

छद्मस्थस्य यथा ध्यानं मनसः स्थैर्यमुच्यते ॥ तथैव वपुषः स्थैर्यं ध्यानं केवलिनो भवेत् ॥ १०१ ॥

यथा येन प्रकारेण छद्मस्थस्य योगिनो मनसः स्थैर्यं ध्यानमुच्यते, तथैव तेन प्रकारेण वपुषः स्थैर्यं शरीरस्य निश्चलत्वं केवलिनो ध्यानं शैलेशीकरणं भवेत्, ततः स शीघ्रम् अयोगिगुणस्थानकं यातीत्यादि ॥

जह छउमत्थस्स मणो झाणं मन्नइ सुनिचलं संतं । तह केवलिणो काओ सुनिचलो भण्णइ झाणं ॥ ८४ ॥

इत्यावश्यकभाष्येऽपि ध्यानशतके बोध्यम्, इति सयोगिककेवल्यादीनामन्ते शरीरस्थैर्यमेव ध्यानमितिविचारः ॥ १५० ॥

१ परयो· शुक्लध्यानभेदयो· ध्यातार· केवलिनः सयोगिगुणस्थानवर्तिनो ऽयोगिगुणस्थानवर्तिनश्च ज्ञेया इत्यावश्यकलघुवृत्तौ ।

ननु श्रीशय्यम्भवसूरिभिः स्वपुत्रे मनकनामके देवभूयं गते सति अश्रुपातः कृतः स शोकतो हर्षतो वा 'उच्यते' केचित् शोकत इत्याहुः, तदयुक्तं युगप्रधानत्वेन महापुरुषाणां तेषां श्रुतकेवलिनां तादृक्शोकोत्पत्तेरसंभवात्, किन्तु हर्षत एव, अहो स्वल्पेनैव कालेनानेन बालेन आराधितमिति विमर्श एव तत्र हर्षकारणमभूदिति, यदुक्तं श्रीदशवैकालिकनिर्युक्तौ ॥

आणंद अंसुपायं कासी सज्जंभवा तहि थेरा । जसभद्दस्स य पुच्छा कहणा य वियारणा संघे ॥ १ ॥

अहो आराधितम् अनेनेति हर्षादश्रुमोक्षणम् अकार्षुरिति दशवैकालिकबृहद्वृत्तौ, इति श्रीशय्यम्भवसूरीणां हर्षाश्रुपातविचारः ॥ १४८ ॥

ननु द्रव्य–क्षेत्र–काल भावानां मध्ये कः कस्मात् सूक्ष्मतम इति चेच्छृणु, समयात्मकः कालः सूक्ष्मः, एकस्मिंश्चक्षुर्निमेषोन्मेषे ऽसंख्यातसमयसद्भावात्, ततोऽपि क्षेत्रं सूक्ष्मतरम् अङ्गुलश्रेणिमात्रक्षेत्रप्रदेशानां प्रतिसमयमेकैकप्रदेशापहारेऽसंख्येयोत्सर्पिण्यवसर्पिणीकालापक्रमणात्, ततोऽपि द्रव्याणि सूक्ष्मतमानि एकैकस्मिन् आकाशप्रदेशे अनन्तानन्तपरमाण्वादिपुद्गलद्रव्यावगाहनात्, तेभ्योऽपि भावशब्दवाच्याः पर्यायाः अतिसूक्ष्मतमाः प्रतिपरमाण्वादिद्रव्येषु अनन्तानन्तपर्यायसद्भावात्, यदुक्तम् आचाराङ्गनिर्युक्तिवृत्त्योर्लोकप्रकाशे च ॥

निउणो य हवइ कालो तत्तो निउणयरं अ हवइ खित्तं । अंगुलसेढीमित्ते ओसप्पिणीओ असंखिज्जा ॥ ८९ ॥

निपुणः सूक्ष्मः कालः समयात्मकस्ततोऽपि सूक्ष्मतरं क्षेत्रं भवति यतो ऽङ्गुलश्रेणिमात्रक्षेत्रप्रदेशानां समयापहारेण असंख्येया

हण्यां निश्चयनयमतेन शैलेशीचरमसमये एव धर्म उक्तः, तत्पूर्वसमयेषु तु तत्साधनस्यैव संभवः ॥

**सो उ भवक्खयहेऊ सेलेसीचरमसमयभावी जो । सेसो पुण निच्छयओ तस्सेव पसाहगो भणिओ त्ति ।**

वचनात् "धर्म्मपदव्युत्पत्तिनिमित्तग्राहक एवंभूतरूपनिश्चयनयो ऽत्र बोध्यः" इत्यव्यभिचारिसम्यक्त्वलक्षणविचारस्तदन्तर्गत एव जैनानामनभिग्रहिकत्वविचारस्तथा चतसृष्वपि गतिषु क्षायकादिसम्यक्त्वलक्षणविचारस्तथा निश्चयनयेन शैलेशीचरमसमये एव धर्मप्राप्तिविचारः ॥ १५१ ॥

श्रीजिनलाभसूर्यादिसद्गुरूणामनुग्रहात् । क्षमाकल्याणगणिना निर्मिते स्मृतिहेतवे ॥ १ ॥
प्रश्नोत्तरसार्द्धशतेऽपरार्द्धं परिपूर्णताम् । गतं स्यादत्र यः कश्चिद् दोषः शोध्यः स धीधनैः ॥ २ ॥

युग्मम्,

इति श्रीप्रश्नोत्तरसार्धशतके उत्तरार्धम् ॥

श्रीमन्तो जिनभक्तिसूरिगुरवश्चान्द्रे कुले जज्ञिरे । तच्छिष्या जिनलाभसूरिमुनिपाः श्रीप्रीतितःसागराः ।
तच्छिष्यामृतधर्मवाचकवरास्तेषां विनेयेन सद् । दृब्धं शास्त्रमिदं ग्रहीतमनिशं प्राज्ञैश्चिरं नन्दतात् ॥ १ ॥
प्रारब्धं प्रवरे पुरे सुविदिते श्रीजेशलाद्रौ ततः । वीकानेरपुरे विरच्य बहुलं श्रीजेशलाद्रौ पुनः ।
नीतं तत्परिपूर्णतां विजयिनः सन्नीतिराज्ये मुदा । श्रीमद्यादववंशमण्डनमणेः श्रीमूलराजेशितुः ॥ २ ॥

